माध्यमिककक्षायाः पाठ्यक्रमः

# वेदाध्ययनम् - २४५

## पुस्तकम् - २




**राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्**

ए-२४-२५, संस्थागतक्षेत्रम् , विभागः - ६२

नोएडा - २०१ ३०९ (उत्तरप्रदेशः)

जालपुटकूटम् - www.nios.ac.in निर्मूल्यः दूरभाषः - १८००१८०९३९३

**National Institute of Open Schooling**

A-२४-२५, Institutional Area, Sector – ६२

NOIDA – २०१ ३०९ (UP)

# माध्यमिककक्षा - वेदाध्ययनम् (२४५)

## मन्त्रणामण्डलम्

**आचार्यः चन्द्र-भूषण-शर्मा**
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**श्री संजय-कुमार-सिन्हा**
निदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

**डॉ. सन्ध्या-कुमारः**
उपनिदेशकः (शैक्षिक)
रा.मु.वि.शि.संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

## पाठ्यविषय-निर्मिति-समितिः

**समितेः अध्यक्षः**
डॉ. के. इ. देवनाथन्
कुलपतिः
श्रीवेङ्कटेश्वर-वैदिक-विश्वविद्यालयः
चन्द्रगिरिपरिमार्गः, अलिपिरि
तिरुपतिः - ५१७ ५०२ (आन्ध्रप्रदेशः)

**समितेः उपाध्यक्षः**
**डॉ. दिलीपपण्डाः**
सहायकप्राध्यापकः (संस्कृतविभागः)
हिरालाल-मजुमदार-मेमोरियल-कालेज
दक्षिणेश्वरः, कलिकाता - ७०० ०३५ (पश्चिमवङ्गम्)

**डॉ. रामनाथझा**
आचार्यः (संस्कृताध्यनविशेषकेन्द्रम्)
जवाहरलाल-नेहरू-विश्वविद्यालयः, नवदेहली

**डॉ. सन्तोषकुमारशुक्लः**
आचार्यः (संस्कृताध्यनविशेषकेन्द्रम्)
जवाहरलाल-नेहरू-विश्वविद्यालयः, नवदेहली

**आचार्यः फूलचन्दः**
वैदिकगुरुकुलम्, पतञ्जलि-योगपीठम् , हरिद्वारम् (उत्तराखण्डः)

**आचार्यः प्रद्युम्नः**
वैदिकगुरुकुलम्
पतञ्जलि-योगपीठम्, हरिद्वारम् (उत्तराखण्डः)

**श्रीमान् सन्तुकुमारपानः**
सहायकप्राध्यापकः (संस्कृतविभागः)
विजयनारायण-महाविद्यालयः
पत्रालयः - इटाचुना, मण्डलम् - हुगली - ७१२१४७ (प.वङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

## पाठ्यक्रम-समन्वयकः

**डॉ. राम-नारायण-मीणा**
सहायक-निदेशकः (शैक्षिक)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्
नोएडा, उत्तरप्रदेशः - २०१ ३०९

# पाठ्यविषयसामग्री-निर्मिति-समितिः

## संपादकमण्डलम्

**डॉ. दिलीपपण्डाः**
सहायकप्राध्यापकः (संस्कृतविभागः)
हिरालाल-मजुमदार-मेमोरियल-कालेज फॉर विमिन
दक्षिणेश्वरः,
कलिकाता - ७०० ०३५ (पश्चिमवङ्गम्)

**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## पाठलेखकाः

**(पाठः १, ५, ६, १७-२४)**
**श्रीमान् राहुलगाजिः**
अनुसन्धाता (संस्कृतविभागः)
यादवपुरविश्वविद्यालयः
कलिकाता - ७०० ०३२ (प.वङ्गम्)

**(पाठः २, ३, ४, ७, ९-१५)**
**श्रीमान् विष्णुपदपालः**
अनुसन्धाता (संस्कृताध्ययनविभागः)
रामकृष्ण-मिशन-विवेकानन्द-विश्वविद्यालयः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः ८)**
**स्वामी वेदतत्त्वानन्दः**
प्राचार्यः
रामकृष्ण-मठ-विवेकानन्द-वेद-विद्यालयः
बेलुड-मठः, मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

**(पाठः १६)**
**डॉ. दिलीपपण्डाः**
सहायकप्राध्यापकः (संस्कृतविभागः)
हिरालाल-मजुमदार-मेमोरियल-कालेज फॉर विमिन
दक्षिणेश्वरः,
कलिकाता - ७०० ०३५ (पश्चिमवङ्गम्)

## रेखाचित्राङ्कनं मुखपृष्ठचित्रणं च

**स्वामी हररूपानन्दः**
रामकृष्ण-मिशन्
बेलुड-मठः
मण्डलम् - हावडा - ७११ २०२ (प.वङ्गम्)

## अध्यक्षीयः सन्देशः

प्रिय विद्यार्थिन्

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमस्य अध्ययनाय अध्येत्रे हार्दं स्वागतं व्याह्रियते।

भारतम् अति प्राचीनम् अति विशालं च। भारतस्य वाङ्मयमपि तथैव प्राचीनं प्रशस्यतरं सुमहत् च। सृष्टिकर्ता भगवान् एव भारतीयानां सकलविद्यानाम् उत्स इति सिद्धान्तः शास्त्रेषु। भारतस्य सुज्ञाते अल्पज्ञाते अज्ञाते च इतिहासे वाग्विनिमयस्य माध्यमं संस्कृतमिति सुविदितं समेषाम्। प्रदीर्घे अस्मिन् भारतेतिहासे यानि शास्त्राणि समुद्भूतानि, यत् चिन्तनं प्रावर्तत, ये भावाः प्रकटिताः तत्सर्वमपि संस्कृतभाषाभाण्डारे निबद्धमस्ति। अस्य भाण्डारस्य आकारः कियान्, तलः कियान् गभीरः, मूल्यं कियद् अधिकम् इति निर्धारणे न कोऽपि समर्थः। पुरा किं किं पठन्ति स्म भारतीया इति एकेन श्लोकेन कथञ्चित् संक्षिप्य प्रकट्यते -

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**
**पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।। (वायुपुराणम् ६१.७८)**

अस्मिन् श्लोके चतुर्दश विद्यास्थानानि कथ्यन्ते। चत्वारो वेदाः (उपवेदाः च) षड् वेदाङ्गानि मीमांसा (पूर्वोत्तरमीमांसे) न्यायः (आन्वीक्षिकी) पुराणम् (अष्टादश मुख्यानि पुराणानि, उपपुराणानि च) धर्मशास्त्रम् (स्मृतिः) इति चतुर्दश विद्यास्थानानि कथ्यन्ते। इतोऽपि काव्यादीनि बहूनि शास्त्राणि सन्ति। एतासां विद्यानाम् उत्सः प्रवाहः प्रदानं प्रगतिः प्रवृद्धिः च महता कालेन जाता। समाजस्य कल्याणाय भारतस्य पाठदानपरम्परायां गुरुकुलेषु आध्यात्मिका मनोवैज्ञानिका शरीरारोग्यविषया राजनीतिः दण्डनीतिः काव्यानि काव्यशास्त्राणि अन्यानि च बहूनि शास्त्राणि पाठ्यन्ते पठ्यन्ते स्म।

एतासाम् विद्यानां शिक्षणाय बटुः पितृगृहं त्यक्त्वा गुरुकुलेषु ब्रह्मचर्याश्रमं यापयति स्म। एतासु निष्पाणो भवति स्म। एतासु विद्यासु निष्णाता जना अद्यापि केचित् सन्ति। नैसर्गिकपरिवर्तनानि परदेशीयानि आक्रमणानि स्वदेशीया विप्लवा इत्यादिभिः बहुभिः कारणैः एता विद्या यथापूर्वं न पाठ्यन्ते भारते। अपिच ये केऽपि पठन्ति तेषां पाठ्यक्रमः परीक्षा प्रमाणपत्रम् इत्यादिकम् आधुनिक-शिक्षणपद्धत्या क्वचित् राज्येषु भवति, बहुत्र नैव भवति। अतः एतेषां प्राचीनशास्त्राणाम् अध्ययनं परीक्षणं प्रमाणीकरणं च भवतु इति धिया अयं पाठ्यक्रमः राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन प्रारब्धः। जनहिताकारि यद् यावद् यथा च ज्ञानं एतेषु शास्त्रेषु निहितं निभृतम् चास्ति तद् जनानां पुरस्तात् प्रकटितं भवतु इति लक्ष्यम्। तेन सर्वेऽत्र सुखिनः सन्तु, सर्वे सन्तु निरामयाः, सर्वे भद्रदृष्टिसम्पना भूत्वा भद्राणि पश्यन्तु, मा कश्चिद् दुःखम् आप्नुयात्, मा कश्चिद् दुःखदाने प्रवर्तेत इति अत्यन्तम् उदारम् उद्देश्यम् 'भारतीयज्ञानपरम्परा' इति नामकस्य अस्य पाठ्यक्रमस्य प्रकल्पने वर्तते। विज्ञानं शरीरारोग्यं चिन्तयति। कलाविषया मनोविज्ञानम् आध्यात्मिकविज्ञानं मनोरञ्जनं च चिन्तयन्ति। विज्ञानं साधनस्वरूपं सुखोपभोगः साध्यं चास्ति। अतः विज्ञानादपि कलाशाखायाः श्रेष्ठत्वं निःसन्देहमस्ति। जनः कलाम् उपयुज्य विज्ञानात् सुखम् नाप्नोति। अपि तु विज्ञानम् उपयुज्य कलातः सुखमाप्नोति। नात्र व्यतिक्रमः परिलक्ष्यते।

अयं वेदाध्ययनस्य पाठ्यक्रमः छात्रानुकूलो ज्ञानवर्धको लक्ष्यसाधकः पुरुषार्थसाधकश्च अस्ति इति विश्वसिमि।

अस्य पाठ्यक्रमस्य निर्माणे ये हिताभिलाषिणो विद्वांसः उपदेष्टारः पाठलेखकाः त्रुटिसंशोधकाः टङ्कायोजकाः च साक्षात् परोक्षरूपेण वा साहाय्यं कृतवन्तः, तेभ्यः संस्थानपक्षतो हार्दिकं कार्तज्ञ्यं व्याह्रियते। रामकृष्णमिशन्-विवेकानन्द-विश्वविद्यालयस्य कुलपतिवर्याः श्रीमन्तः स्वामिन आत्मप्रियानन्दाः विशेषतो धन्यवादार्हा येषाम् आनुकूल्यं प्रेरणां च विना कार्यस्यास्य परिसमाप्तिः दुष्करा एव।

अस्य पाठ्यक्रमस्य अध्येतारो धन्या भवन्तु, सफला भवन्तु, विद्वांसो भवन्तु, सज्जना भवन्तु, देशभक्ता भवन्तु, समाजसेवका भवन्तु इति अति हार्दा सदिच्छा अस्माकम्।

डॉ. चन्द्रभूषणशर्मा
अध्यक्षः
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## निदेशकीया वाक्

प्रिय अध्येतः

'भारतीयज्ञानपरम्परा' इति पाठ्यक्रमं पठितुम् उत्साहिभ्यो भारतीयज्ञानपरम्परायाः अनुरागिभ्य उपासकेभ्यश्च हार्दिकं स्वागतं विज्ञाप्यते। परमहर्षविषयः अयं यद् गुरुकुलेषु अधीयाना विषया अस्माकं राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानस्य पाठ्यक्रमेऽपि समाविष्टा भवन्ति। आ बहोः कालाद् विद्यमानः अन्तरायो दूरीभवेदिति आशासे। हिन्दुजैनबौद्धानां धर्मिकम् आध्यात्मिकं काव्यादिकं च वाङ्मयं प्रायः सर्वमपि संस्कृते निबद्धमस्ति। एतेषां शतस्य कोटीनां मनुजानां प्रियाणाम् विषयाणाम् भूमिकायै प्रस्तुत्यै प्रवेशयोग्यतायै प्ररोचनायै च माध्यमिकस्तरे उच्चमाध्यमिकस्तरे च केचिद् विषयाः पाठ्यत्वेन योज्यन्ते। यथा आंग्ल-हिन्द्यादिभाषाज्ञानं विना तत्तद्भाषया लिखिता माध्यमिकस्तरीया ग्रन्थाः पठितुं बोद्धुं च न शक्यन्ते तद्वत् अत्रापि प्रारम्भिकं संस्कृतं न जानाति चेत् इमं पाठ्यक्रमं बोद्धुं न पारयेत्। अतः प्रारम्भिकं संस्कृतं विद्वान् छात्रः अत्र अस्य पाठ्यक्रमस्य अध्ययने अधिकारित्वेन इति गण्यते।

गुरुकुलेषु अधीयानाः छात्रा अष्टमकक्षां यावत् कामं स्वपरम्परानुसारम् अध्ययनं करोतु। नवमदशमकक्षयोः तु एकादशद्वादशकक्षयोः च भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य निष्ठया नियमितम् अध्ययनं करोतु। अस्य पाठ्यक्रमस्य अध्येता उच्चशिक्षायै योग्यो भविष्यति।

संस्कृतस्य विभिन्नेषु शास्त्रेषु कृतभूरिपरिश्रमाः विद्वांसः प्राध्यापकाः शिक्षकाः शिक्षाविदः च अस्य पाठ्यक्रमस्य प्रारूपरचनायाम् विषयनिर्धारणे विषयपरिमाणनिर्धारणे विषयप्रकटनभाषास्तरनिर्णये विषयपाठलेखने च संलग्नाः। अतः अस्य पाठ्यक्रमस्य स्तरः उन्नत एव इति किम् उ वक्तव्यम्।

वेदाध्ययनस्य एषा स्वाध्यायसामग्री भवतां कृते पर्याप्ता सुबोधा रुचिरा आनन्दरसस्यन्दिनी सौभाग्यदायिनी धर्मार्थकाममोक्षोपयोगिनी च स्यादिति आशास्महे। अस्य पाठ्यक्रमस्य प्रधानं लक्ष्यं यद् भारतीयज्ञानपरम्परायाः शैक्षणिकक्षेत्रेषु विशिष्टं योग्यं च स्थानं स्वीकृतिः गवेषणा च स्यादिति। तल्लक्ष्यम् पाठ्यक्रमेणानेन सेत्स्यति इति दृढविश्वासिनो वयम्।

अध्येता अध्ययनकाले यदि मन्येत यद् अस्मिन् अध्ययनसम्भारे पाठनिचये यत्र संशोधनं परिवर्तनं परिवर्धनं संस्कारः च अपेक्ष्यन्ते, तेषां समेषां प्रस्तावानां वयं स्वागतं कर्तुं सिद्धाः स्मः। अमुं पाठ्यक्रमम् इतोऽपि अधिकम् प्रभाविनम् उपयोगिनं सरलं च विधातुं भवद्भिः सह वयं सदा प्रयत्नपरा एव।

अध्येतॄणां समेषामपि अध्ययने साफल्याय जीवने च साफल्याय कृतकृत्यायै च आशीर्वचः अस्माकम्।

किं बाहुना विस्तरेण। अस्माकं गौरववाणीं जगति विरलाम् सर्वविद्याया लक्ष्यभूताम् एव उद्धरामि -

**सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्॥**

**दुर्जनः सज्जनो भूयात् सज्जनः शान्तिमाप्नुयात्।**
**शान्तो मुच्येत बन्धेभ्यो मुक्तश्चान्यान् विमोचयेत्॥**

**स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया।**
**मनश्च भद्रं भजतादधोक्षजे आवेश्यतां नो मतिरप्यहैतुकी॥**

श्री संजय-कुमार-सिन्हा
निदेशकः (शैक्षिकम्)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## समन्वयकीयानि वचांसि

प्रिय जिज्ञासो

**ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु। मा विद्विषावहै॥ ॐ शान्तिः शान्तिः शान्तिः॥**

परम्पराम् अवलम्ब्य इयं प्रार्थना यद् अस्माकम् अध्ययनं विघ्नरहितं भवतु। अज्ञाननाशकं तेजस्वि भवतु। विद्वेषभावनानाशकं भवतु। विद्यालाभेन सर्वविधतापानां शान्तिः भवतु इति।

भारतीयज्ञानपरम्परा इति पाठ्यक्रमस्य अङ्गभूतोऽयं पाठ्यविषयः। अस्य माध्यमिककक्षायाः कृते निर्धारणमस्ति। एतत्पाठ्यक्रमस्य पाठनिचयात्मिकाम् इमाम् अध्ययनसामग्रीम् भवते ददद् अहं परमं हर्षम् अनुभवामि। सरलं संस्कृतं जानन् यः कोऽपि अस्य अध्ययने समर्थो गण्यते।

अनन्ता वै वेदाः। भारतीयानां गर्वस्थानं श्रद्धास्पादं ज्ञानमूलं जीवनपथप्रदर्शकः इहपरलोकज्ञापकः वेदः। बहुषु शाखासु भिन्नः। वेदाङ्गानि च षट्। उपवेदाः च सन्ति। वैदिकशब्दाः बहुत्र लौकिकशब्देभ्यो भिन्नाः। तत्र व्याकरणस्य विशिष्टा नियमाः। अतः पाठ्यक्रमेऽस्मिन् वैदिकवाङ्मयस्य इतिहासः, सूक्तानि, व्याकरणम् चेति त्रेधा विभागः परिकल्पितः। क्लिष्टविषया अत्यन्तं सरलया गिरा अस्मिन् पाठ्यक्रमे वर्तते।

माध्यमिककक्षायां प्रदत्तः वेदाध्ययनम् इति विषयः अपि अत्यन्तम् उपकारकः वर्तते। छात्रः तस्य अध्ययनेन ज्ञानेन परिपुष्टः भवेत्। माध्यमिककक्षाया वेदाध्ययनम् इति विषयस्य अध्ययनेन वेदे प्रवेशाय छात्रस्य योग्यता कल्प्यते। एतत्सामग्री वेदानां सश्रद्धम् अध्ययने प्रवेशाय प्ररोचनाय च। अनया आकरग्रन्था न गतार्था न वा हेयाः अपि तु गभीरतया अध्येयाः।

समग्रोऽपि पाठ्यविषयः द्वयोः पुस्तकयोः कल्पितोऽस्ति।

अध्येता पाठान् सम्यक् पठित्वा पाठगतानां प्रश्नानाम् उत्तराणि स्वयं विचार्य अन्ते प्रदत्तानाम् उत्तराणां दर्शनं कुर्यात्, तैः उत्तरैः स्वस्य उत्तरं च मेलयेद्। प्रतिपत्रं प्रदत्ते रिक्तभागे स्वस्य टिप्पणीं रचयेद्। पाठान्ते प्रदत्तानाम् उत्तराणि निर्माय परीक्षायै सन्नद्धो भवतु।

पाठ्यक्रमस्य सविस्तरं विवेचनं प्रश्नपत्रस्य पारूपम् प्रश्नपत्रस्य प्रतिमा तदुत्तराणि च पुस्तकस्य अन्ते द्रष्टव्यानि। अध्ययनारम्भात् प्राक् नूनमेव अध्येता तत्र दत्तान् बिन्दून् अवलोकयेत्। तेन अध्ययनस्य दिशा गतिः च सुष्ठु स्याताम्।

अध्ययनसम्भारे क्वापि काठिन्यम् अनुभूयते चेत् अध्ययनकेन्द्रं यथाकालं गत्वा समस्यासमाधानाय आचार्यं पश्यतु। राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानेन सह ई-पत्रद्वारा सम्पर्कं वा करोतु। जालपुटे अपि संपर्कव्यवस्था वर्तत एव। जालपुटकूटः www.nios.ac.in इति अस्ति।

पाठ्यविषयोऽयं भवतः ज्ञानं वर्धयतात् , परीक्षासु साफल्यम् आवहतात् , रुचिं वर्धयतात् , मनोरथान् पूरयतात् इति कामये।

अज्ञानान्धकारस्य नाशाय ज्ञानज्योतिषः दर्शनाय च इयं मे हार्दिकी प्रार्थना -

**ॐ असतो मा सद् गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मामृतं गमय॥ ॐ शान्तिः शान्तिः शान्तिः॥**

भवत्कल्याणकामी

राम-नारायण-मीणा
पाठ्यक्रमसमन्वयकः (शैक्षिकम्)
राष्ट्रीय-मुक्त-विद्यालयी-शिक्षा-संस्थानम्

## पुस्तकम्- १

### वैदिकसाहित्येतिहासः

१. वेदविषयप्रवेशः
२. वेदानां कालः, पाठप्रकाराः,
मन्त्राणां च ऋषिच्छन्दोदेवताविनियोगाः
३. वेदभाष्यकाराः
४. वेदभाष्यपद्धतिः
५. वैदिकाख्यानं, दार्शनिकानां नये वेदविमर्शः च
६. वैदिकयागाः
७. वैदिकदेवता

### वैदिकसूक्ताध्ययनम्

८. सूर्यसूक्तं संज्ञानसूक्तं च
९. पूषन्-सूक्तम् उषस्सूक्तं च
१०. वरुणसूक्तम्
११. यमसूक्तम्
१२. शुनःशेपोपाख्यानम्- १
१३. शुनःशेपोपाख्यानम् - २
१४. शुनःशेपोपाख्यानम्- ३
१५. विश्वामित्रनदीसंवादः

## पुस्तकम्- २

### वैदिकी प्रक्रिया

१६. अष्टाध्याय्याः प्रथमद्वितीयौ (१-२) अध्यायौ
१७. अष्टाध्याय्याः तृतीयः (३) अध्यायः
१८. अष्टाध्याय्याः तृतीयचतुर्थौ (३,४) अध्यायौ
१९. अष्टाध्याय्याः चतुर्थः (४) अध्यायः
२०. अष्टाध्याय्याः पञ्चमषष्ठौ (५,६) अध्यायौ
२१. अष्टाध्याय्याः षष्ठसप्तमौ (६, ७) अध्यायौ
२२. अष्टाध्याय्याः सप्तमः (७) अध्यायः
२३. अष्टाध्याय्याः अष्टमः (८) अध्यायः- १
२४. अष्टाध्याय्याः अष्टमः (८) अध्यायः- २

# वेदाध्ययनम्

# माध्यमिककक्षा

## द्वितीयं स्वाध्यायपर्व

# वैदिकव्याकरणम्

१६

# अष्टाध्याय्याः प्रथमद्वितीयौ अध्यायौ

## प्रस्तावना

संस्कृतवाङ्मये शब्दः द्विविधः लौकिकः वैदिकश्चेति। तयोः बोधः व्याकरणात् ऋते असम्भवः। तच्च व्याकरणम् लौकिकम् वैदिकम् चेति द्वेधा विभक्तम्। सन्ति च लौकिकवैदिकशब्दज्ञानाय नैके व्याकरणग्रन्थाः। तत्र पाणिनीयव्याकरणम् उभयविषयकं वर्तते। भगवता पाणिना अष्टाध्यायी रचिता। ताम् च आश्रित्य श्रीमता भट्टोजीदीक्षितेन वैयाकरणसिद्धान्तकौमुदी प्रातन्यत। तस्याः अन्तिमांशे वैदिकी प्रक्रिया प्रदर्शिता। इतः परम् पाठेषु सा एव वैदिकी प्रक्रिया प्रदर्शयिष्यते। परन्तु पाठविस्तरभयात् चितानाम् एव सूत्राणाम् आलोचना विधास्यते। सूत्रचनयस्य क्रमस्तु अष्टाध्यायीक्रमानुसारी। अर्थात् अष्टाध्याय्याम् येन क्रमेण वैदिकव्याकरणस्य सूत्राणि सन्ति तेन क्रमेण अत्र उपात्तानि। अत एव पाठस्य नाम अपि तदनुरूपमेव।

तत्रादौ अस्मिन् प्रथमे पाठे ये विषयाः आलोचयिष्यन्ते तेषु केचन - पुनर्वस्वोः द्वयोः एकवचनम्, षष्ठ्यन्तस्य पतिशब्दस्य घिसंज्ञा, इत यजेः करणे, छन्दसि बहुलं षष्ठी इत्यादि। लौकिकप्रयोगे तावत् धातोः पूर्वम् उपसर्गाणां प्रयोगो भवति। वेदे तु उपसर्गाणां धातोः परम्, कदाचित् च व्यवधानेन प्रयोगः सम्भवति, धातोः परमपि प्रयोगः सम्भवति। परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः इत्यादिनियमेन द्वन्द्वसमासस्य परवल्लिङ्गं प्रसिद्धम्, वेदे तावत् द्वन्द्वस्य पूर्ववल्लिङ्गमपि भवति। अत्र च पाठे बहुलशब्दार्थोऽपि वक्ष्यते। किञ्च षष्ठीयुक्तश्छन्दसि वा इत्यस्य योगविभागेन सर्वे विधयश्छन्दसि विकल्प्यन्ते इति या परिभाषा सिध्यति सास्मिन् प्रदर्शयिष्यते। अत्र च पाठे भवतां बोधसौकर्याय तत्तत्सूत्रव्याख्यानावसरे वैदिकरूपैः सह लौकिकरूपाणि अपि उल्लेखिष्यन्ते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- छन्दसि रूपप्रक्रियायाम् लौकिकप्रक्रियातः को भेदः इति ज्ञास्यति।
- वेदे सर्वोऽपि विधिः विकल्पेन भवति इत्येतदर्थबोधिकाम् परिभाषाम् बुध्यात्।
- कस्यचित् शब्दस्य लौकिकरूपम् वैदिकरूपम् च किम् भवति इति ज्ञास्यति।
- वेदे द्वन्द्वस्य पूर्ववल्लिङ्गमपि भवति इत्यवगमिष्यति।



- वेदे उपसर्गाणां कथं प्रयोगः इति बुध्यात्।
- निपातविषयिणी चर्चाम् अवगच्छेत्।
- बहुलशब्दार्थं ज्ञास्यति।

पुनर्वसुशब्देन उद्भूतावयवस्य ज्योतिःसमुदायस्य अभिधानाद् द्वयोः द्विवचने प्राप्ते सूत्रमिदम् आरभ्यते -

## १६.१) छन्दसि पुनर्वस्वोरेकवचनम्॥ (१.२.६१)

**सूत्रार्थः** - छन्दसि पुनर्वस्वोः एकचनम् वा स्यात्।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् त्रीणि पदानि सन्ति। छन्दसि पुनर्वस्वोः एकवचनम् इति सूत्रगतपदच्छेदः। छन्दसि इति सप्तम्यन्तं पदम्, अत्र वैषयिकसप्तमी। छन्दः इति शब्दस्य वेदः इत्यर्थः। अतः छन्दसि इत्यस्य वेदे इत्यर्थः। पुनर्वस्वोः इति षष्ठ्यन्तं पदम्। एकवचनम् इति प्रथमान्तं पदम्। फल्गुनीप्रोष्ठपदानां च नक्षत्रे इति सूत्रात् नक्षत्रे इति पदमनुवर्तते। तच्च षष्ठीद्विवचनान्ततया विपरिणमते। अस्मदो द्वयोश्च इति सूत्रात् द्वयोः इति पदमनुवर्तते। जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् इति सूत्रात् अन्यतरस्यामिति पदमत्रानुवर्तते। तच्च विकल्पार्थकम् सप्तमीविभक्तिप्रतिरूपकमव्ययम्। सूत्रार्थो हि वेदविषये नक्षत्रवाचकात् पुनर्वसुशब्दात् द्वित्वे वाच्ये विकल्पेन एकवचनम् भवति इति। तेन पक्षे द्विवचनमपि भवति। लोके तु द्विवचनमात्रम् भवति।

**उदाहरणम्** - पुनर्वसु, पुनर्वसू।

**सूत्रार्थसमन्वयः** - अश्विनीभरण्यादिषु सप्तविंशतिसंख्यकेषु नक्षत्रेषु पुनर्वसु नक्षत्रं सप्तमम्। एवञ्च नक्षत्रवाचकात् पुनर्वसुशब्दात् द्विवचने प्राप्ते प्रकृतसूत्रेण एकवचनविधानात् सुप्रत्यये स्वमोर्नपुंसकात् इत्यनेन सोः लुकि **पुनर्वसु** इति प्रयोगः सिध्यति। उक्तसूत्रेण वैकल्पिकद्विवचनविधानात् द्विवचनपक्षे औप्रत्यये प्रक्रियया **पुनर्वसू** इति द्विवचनान्तः प्रयोगोऽपि भवति। लोके तु **पुनर्वसू** इत्येव केवलं द्विवचनान्तः प्रयोगो भवति।

विशाखाशब्देन उद्भूतावयवस्य ज्योतिःसमुदायस्य अभिधानाद् द्वयोः द्विवचने प्राप्ते सूत्रमिदम् आरभ्यते -

## १६.२) विशाखयोश्च॥ (१.२.६२)

**सूत्रार्थः** - छन्दसि विशाखयोः विकल्पेन एकवचनम् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् द्वे पदे स्तः। विशाखयोः च इति सूत्रगतपदच्छेदः। विशाखयोः इति षष्ठीद्विवचनान्तं पदम्। च इति अव्ययपदम्। छन्दसि पुनर्वस्वोरेकवचनम् इति सूत्रात् छन्दसि इति एकवचनं चेति पदद्वयमनुवर्तते। जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् इति सूत्रात् अन्यतरस्यामिति पदमत्रानुवर्तते। फाल्गुनीप्रोष्ठपदानां च नक्षत्रे इति सूत्रात् नक्षत्रे इति पदमनुवर्तते। तच्च षष्ठीद्विवचनान्ततया विपरिणमते। अस्मदो द्वयोश्च इति सूत्रात् द्वयोः इति पदमनुवर्तते। सूत्रार्थो हि वेदे



नक्षत्रवाचकात् विशाखशब्दात् द्वित्त्वे वाच्ये विकल्पेन एकवचनम् स्यात् इति। सप्तविंशतिसंख्यकेषु नक्षत्रेषु 'विशाखा' भवति षोडरशतमः नक्षत्रविशेषः। 'विशाखा' इति नक्षत्रनाम्ना 'वैशाख' इति मासस्य नामकरणं जातम्।

**उदाहरणम्** - विशाखा, विशाखे।

**सूत्रार्थसमन्वयः** - नक्षत्रवाचकात् विशाखाशब्दात् द्विवचने प्राप्ते प्रकृतसूत्रेण एकवचनविधानात् **विशाखा** इति प्रयोगो भवति। उक्तसूत्रेण वैकल्पिकैकवचनविधानात् द्विवचनपक्षे **विशाखे** इत्यपि प्रयोगो भवति। लोके तु द्विवचनमेव। तेन **विशाखे** इत्येव प्रयोगः।

पतिः समास एव (१.४.८) इति सूत्रेण पतिशब्दस्य समासमात्रे घिसंज्ञा विधीयते। तेन असमासे पतिशब्दस्य घिसंज्ञा न भवति। एतत्तु लोके। किन्तु वेदे असमासेऽपि घिसंज्ञा यथा स्यात् तदर्थम् अग्रिमसूत्रम् आरभ्यते -

## १६.३) षष्ठीयुक्तश्छन्दसि वा॥ (१.४.९)

**सूत्रार्थः** - षष्ठ्यन्तेन युक्तः पतिशब्दः छन्दसि घिसंज्ञो वा स्यात्।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् त्रीणि पदानि सन्ति। षष्ठीयुक्तः छन्दसि वा इति सूत्रगतपदच्छेदः। षष्ठीयुक्तः इति प्रथमान्तं पदम्। तस्य च अर्थो भवति षष्ठ्यन्तेन युक्तः इति। छन्दसि इति सप्तम्यन्तं पदम्, अत्र वैषयिकसप्तमी। वा इति विकल्पार्थकम् अव्ययम्। पतिः समास एव इति सूत्रात् पतिः (१/१) इति पदमनुवर्तते। शेषो घ्यसखि इति सूत्रात् घि इत्यनुवर्तते। (घि इति एका संज्ञा। सा च शेषो घ्यसखि इति सूत्रेण विधीयते। तदर्थः ह्रस्वौ यौ इदुतौ तदन्तं सखिवर्जं घिसंज्ञम् भवति इति)।

षष्ठीयुक्तश्छन्दसि वा इत्यस्य योगविभागः क्रियते। योगः नाम सूत्रम्। षष्ठीयुक्तश्छन्दसि इत्येकः योगः (सूत्रम्), वा इति अपरः योगः (सूत्रम्)। 'वा' इति द्वितीयसूत्रे छन्दसि इति पदम् अनुवर्तते। तेन 'वा छन्दसि' इति द्वितीयसूत्रस्य आकारः। तत्र प्रथमसूत्रस्य अर्थो हि वेदविषये षष्ठ्यन्तेन युक्तः पतिशब्दः घिसंज्ञको भवति इति। द्वितीयसूत्रार्थस्तावत् - व्याकरणशास्त्रे यावत् कार्यम् वर्तते तद् वेदे विकल्पेन भवति इति। तेन प्रथमसूत्रेण यो विधिः उक्तः सोऽपि विकल्पेन भवति इत्यायाति। एवञ्च योगविभागे कृते द्वितीययोगेन प्रथमसूत्रस्य यः अर्थः आयातः स तु पाणिनिकृतेन षष्ठीयुक्तश्छन्दसि वा इति मूलसूत्रेणैव सिद्धः। अतः अयम् योगारम्भः व्यर्थः भवति। व्यर्थः सन् ज्ञापयति यत् सर्वे विधयश्छन्दसि विकल्प्यन्ते इति। तेन योगारम्भे कृते सति प्रथमसूत्रेण यो विधिः उक्तः सः विकल्पेन भवति इति सिध्यति। एवं योगविभागः स्वांशे चरितार्थः। अन्यत्रापि अस्य फलम् अस्ति। यथा - प्रतीपमन्य उर्मिर्युद्ध्यति इति आत्मनेपदप्रयोगस्थले युद्ध्यति इति परस्मैपदप्रयोगोऽपि भवति। योगारम्भः न क्रियते चेत् षष्ठीयुक्तश्छन्दसि वा इति सूत्रे यत् विकल्पत्वम् उच्यते तत् तस्मिन्नेव स्यात्। अन्यत्र न स्यात्। किन्तु अन्यत्रापि विकल्पत्वम् यथा स्यात् तदर्थम् अयम् योगविभागः कृतः। बहुलं छन्दसि इत्यादिः तस्यैव प्रपञ्चः। तेन प्रथमसूत्रेण विधीयमानं कार्यं छन्दसि विकल्पेन इति लभ्यते।

**उदाहरणे सूत्रार्थसमन्वयः** - "क्षेत्रस्य पतिना वयम्" इत्यस्मिन् प्रयोगे समासाभावात् पतिः समास एव इति सूत्रेण घिसंज्ञायाम् अप्राप्तायाम् षष्ठीयुक्तश्छन्दसि इति प्रकृतसूत्रेण क्षेत्रस्य इति



षष्ठ्यन्तेन युक्तस्य पतिशब्दस्य विकल्पेन घिसंज्ञायाम् पतिशब्दात् विहितस्य टाप्रत्ययस्य स्थाने आङो नास्त्रियाम् इति योगेन आङः नादेशे **पतिना** इति रूपम् सिध्यति (तृतीयैकवचनस्य टाविभक्तेः आङ्संज्ञा इति प्राचीनवैयाकरणः)। घिसंज्ञाभावे **पत्या** इति रूपम्। लोके तु समासे एव घिसंज्ञा। यथा **भूपतिना** इति। असमासस्थले तु **पत्या** इत्येव प्रयोगः।

## १६.४) अयस्मयादीनि च्छन्दसि॥ (१.४.२०)

**सूत्रार्थः** - अयस्मादीनि छन्दसि साधूनि।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् द्वे पदे स्तः। अयस्मयादीनि छन्दसि इति च। अयस्मयादीनि इति प्रथमान्तं पदम्। अयस्मयः आदिः येषां तानि इमानि अयस्मयादीनि इति बहुव्रीहिसमासः। च्छन्दसि इति सप्तम्यन्तं पदम्, अत्र वैषयिकसप्तमी। ततश्च सूत्रार्थो भवति अयस्मयादीनि पदानि छन्दसि विषये साधूनि भवन्ति। अयस्मयादयः शब्दाः वेदे साधुशब्दत्वेन व्यवह्रियन्ते अर्थात् प्रयोजनानुसारं भसंज्ञा पदसंज्ञा च विधीयेते। अस्यैव अर्थस्य प्रतिपादकम् उभयसंज्ञान्यपि इति वक्तव्यम् इति वार्तिकमपि अत्र पठितम्। भसंज्ञायाः पदसंज्ञायाः च अधिकारे अस्य सूत्रस्य पाठात् वेदे अयस्मयः इत्यादीनां शब्दानां साधुत्वमङ्गीक्रियते।

**उदाहरणम्** - स सुष्टुभा स **ऋक्वता** गणेन (ऋ.३-७-२६)।

**सूत्रार्थसमन्वयः** - अयस्मयादिगणे ऋक्वता इति शब्दः पठितः अस्ति। ऋचः अस्य सन्ति इति विग्रहे ऋच्-शब्दोत्तरम् मतुप्प्रत्यये मकारस्य च वकारादेशे ऋच्वत् इत्यवस्थायाम्, उभयसंज्ञान्यपि इति वक्तव्यम् इति वार्तिकबलात् पदसंज्ञायां चोः कुः इत्यनेन सूत्रेण पदान्तस्य चकारस्य कुत्वे ककारः। तस्मात् ऋक्वत् इति शब्दो निष्पद्यते। तस्य च शब्दस्य तृतीयैकवचने **ऋक्वता** इति रूपम्। भसंज्ञायां सत्याम् च झलां जशोऽन्ते इत्यनेन सूत्रेण न जश्त्वम् तेन न ककारस्य गकारः। जश्त्वविधानार्थायाः पदंज्ञायाः भत्वसामर्थ्येन बाधात्। अन्यथा जश्त्वमेव स्यात् कुत्वं न स्यात् इति इष्टप्रयोगहानिः स्यात्। अत एव उक्तवाक्यान्तर्गते ऋक्वता इति पदे पदत्वात् कुत्वं भत्वात् जश्त्वाभाव एव। न चात्र अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा इति न्यायम् प्रबाध्य उभयसंज्ञाविधाने किम् प्रमाणम् आनन्तर्यात् एकैव संज्ञा स्यात् इति वाच्यम्। उभयसंज्ञान्यपि इति वक्तव्यम् इति वार्तिकोक्तत्वात्। लोके तु **ऋग्वता** इति रूपम्।

अयसो विकारः इति विग्रहे मयड् वैतयोर्भाषायाम् इत्यनेन मयटि प्रक्रियया अयस् मय इति स्थिते लोके सकारस्य रुत्वे रोश्च उत्वे अय् अ उ मय इति जाते आद्गुणः इति गुणैकादेशे ओकारे विभक्तिकार्ये च **अयोमयः** इति रूपम् भवति इति लोके। परन्तु पूर्वोक्तसूत्रे अयस्मय इत्येवं पाठदर्शनात् छन्दसि सकारस्य रुत्वाभावः भसंज्ञया सिध्यति। तेन **अयस्मयः** इत्येव रूपम् वेदे।

## १६.५) छन्दसि परेऽपि॥ (१.४.८१)

**सूत्रार्थः** -छन्दसि गत्युपसर्गसंज्ञकाः धातोः परेऽपि भवन्ति।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् त्रीणि पदानि सन्ति। छन्दसि परे अपि इति सूत्रगतपदच्छेदः। परे अपि इत्यत्र एङः पदान्तादति इत्यनेन पूर्वरूपः। छन्दसि इति सप्तम्यन्तं पदम्, अत्र वैषयिकसप्तमी।

परे इति प्रथमाबहुवचनान्तम्। अपि इति अव्ययपदम्। ते प्राग्धातोः इति सूत्रात् ते इति धातोः चेति पदद्वयमनुवर्तते। ते इत्यनेन गतिसंज्ञकशब्दानाम् उपसर्गसंज्ञकशब्दानां च ग्रहणं भवति। सूत्रार्थो भवति - छन्दोविषये गतिसंज्ञकशब्दाः उपसर्गसंज्ञकशब्दाः धातोः परे अपि स्युः इति।

**उदाहरणम्** - याति नि हस्तिना। निहन्ति मुष्टिना।

**सूत्रार्थसमन्वयः**- **याति नि हस्तिना** इति छान्दसः प्रयोगः। अत्र नि इति गतिसंज्ञकः अस्ति। प्रकृतसूत्रेण गतिसंज्ञकस्य नि-इत्यस्य याति इति धातोः परम् प्रयोगः सिध्यति। लोके तु **ते प्राग्धातोः** इति नियमेन धातोः पूर्वमेव गत्युपसर्गसंज्ञकाः शब्दाः प्रयुज्यन्ते।

## १६.६) व्यवहिताश्च॥ (१.४.८२)

**सूत्रार्थः** - छन्दसि गत्युपसर्गसंज्ञकाः व्यवहिताः अपि भवन्ति।

**सूत्रावतरणम्**- वेदे गतिसंज्ञकानाम् उपसर्गसंज्ञकानां च शब्दानाम् व्यवधानेनापि धातोः परम् पूर्वं वा प्रयोगार्थं सूत्रमिदम् आरब्धम्।

**सूत्रव्याख्या** - अस्मिन् सूत्रे द्वे पदे स्तः। व्यवहिताः च इति सूत्रगतपदच्छेदः। व्यवहिताः इति प्रथमान्तं पदम्। चेति अव्ययपदम्। छन्दसि परेऽपि इति सूत्रात् छन्दसि इति पदमनुवर्तते, अत्र वैषयिकसप्तमी। ते प्राग्धातोः इति सूत्रात् ते इति धातोः चेति पदद्वयमनुवर्तते। ते इत्यनेन गतिसंज्ञकशब्दानाम् उपसर्गसंज्ञकशब्दानां च ग्रहणं भवति। सूत्रार्थो हि वेदे गतिसंज्ञकशब्दानाम् उपसर्गसंज्ञकशब्दानाम् च अपरेण केनचित् शब्देन व्यवहितत्वेऽपि प्रयुज्यन्ते। ततः व्यवधानेन गत्युपसर्गसंज्ञकशब्दाः धातोः पूर्वम् परम् वा प्रयुज्यन्ते इति सूत्रस्यास्य आशयः। छन्दसि गत्युपसर्गसंज्ञकाः परेऽपि प्रयोक्तव्याः इति सूत्रस्य भावः।

**उदाहरणम्** - हरिभ्यां याह्योक आ। आ मन्द्रैरिन्द्र हरिभिर्याहि।

**सूत्रार्थसमन्वयः** - याहि ओक आ इत्यत्र अत्र 'आ' इत्युपसर्गस्य **ते प्राग्धातोः** इति सूत्रानुसारं याहि इत्यस्मात् पूर्वमेव प्रयोगे आयाहि इति प्राप्ते व्यवहिताश्च इति प्रकृतसूत्रबलेन आ इत्यस्य परे प्रयोगात् **हरिभ्यां याह्योक आ** इति सिद्ध्यति। सूत्रे अपि-शब्दसामर्थ्यात् व्यवहिताश्च इति सूत्रबलाच्च 'आ' इत्यस्य व्यवहितत्वेन पूर्वप्रयोगे सति **आ मन्द्रैरिन्द्र हरिभिर्याहि** इति प्रयोगः सिध्यति। एवं छन्दसि उपसर्गानां व्यवहारो दृश्यते। लोके तु उपसर्गाणां प्रयोगः धातोः पूर्वमेव भवति। धातूपसर्गयोः मध्ये न कोऽपि व्यवधानं भवति।



## पाठगतप्रश्नाः- १

१. छन्दसि पुनर्वस्वोरेकवचनम् इत्यस्य कोऽर्थः।
२. षष्ठ्यन्तेन युक्तस्य पतिशब्दस्य विकल्पेन घिसंज्ञा केन भवति।
३. गतिसंज्ञकानाम् उपसर्गसंज्ञकानां च धातोः व्यवहितरूपेण प्रयोगः केन सूत्रेण भवति।
४. किं नक्षत्रम् अनुसृत्य वैशाखमासस्य नामकरणं जातम् अस्ति।



५. छन्दसि परेऽपि इति सूत्रस्य कः अर्थः।
६. षष्ठीयुक्तश्छन्दसि वा इति सूत्रेण का परिभाषा ज्ञापिता।
७. षष्ठीयुक्तश्छन्दसि वा इत्यस्य कोर्थः।
८. लोके असमासे पतिशब्दस्य घिसंज्ञा भवति न वा।

---

## १६.७) तृतीया च होश्छन्दसि॥ (२.३.३)

**सूत्रार्थः** - जुहोतेः कर्मणि तृतीया स्याद्द्वितीया च।

**सूत्रावतरणम्-** वेदे हु-धातोः कर्मणि द्वितीयायाः तृतीयायाश्च विधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - विधायकसूत्रमिदम्। अनेन द्वितीयाविभक्तिः तृतीयाविभक्तिश्च विधीयेते। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। तृतीया च होः छन्दसि इति सूत्रगतपगच्छेदः। तृतीया इति प्रथमान्तं पदम्। च इत्यव्ययपदम्। होः इति षष्ठ्यन्तं पदम्। होः इत्यस्य जुहोतेः धातोः इत्यर्थः। छन्दसि इति सप्तम्यन्तं पदम्, अत्र वैषयिकसप्तमी, तस्य च वेदे इत्यर्थः। अनभिहिते इति अधिकारः। कर्मणि द्वितीया इति सम्पूर्णं सूत्रमत्रानुवर्तते। सूत्रस्थचकारेण द्वितीयाविभक्तिरपि भवति इति बोद्धव्यम्। सूत्रार्थो हि छन्दसि विषये जुहोतेः धातोः अनभिहिते कर्मणि तृतीया द्वितीया च भवति इति।

**उदाहरणम्** - यवाग्वा/यवागूम् अग्निहोत्रं जुहोति।

**सूत्रार्थसमन्वयः** - पूर्वस्मिन् वैदिके वाक्ये हु-धातोः कर्म अस्ति यवागूः इति। अतः प्रकृतसूत्रेण यवागू-शब्दात् तृतीयाविभक्तौ **यवाग्वा** इति रूपं सिध्यति। विकल्पेन द्वितीयविभक्तौ **यवागूम् अग्निहोत्रं जुहोति** इति वाक्यमपि सिध्यति।

## १६.८) द्वितीया ब्राह्मणे॥ (२.३.६०)

**सूत्रार्थः** - ब्राह्मणविषयके प्रयोगे दिवस्तदर्थस्य कर्मणि द्वितीया स्यात्।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् द्वे पदे स्तः। द्वितीया इति प्रथमान्तं पदम्। ब्राह्मणे इति सप्तम्यन्तं पदम्। अत्र च विषयसप्तमी। तेन ब्राह्मणे इत्यस्य ब्राह्मणविषये इत्यर्थो भवति। दिवस्तदर्थस्य इति सम्पूर्णं सूत्रमत्रानुवर्तते। तदर्थशब्देन वि-अव-पूर्वकहृधात्वर्थतुल्यधातोः पण्धात्वर्थतुल्यधातोः च ग्रहणम्। स च दिव्धातुः इति दिवस्तदर्थस्य इति सूत्रे स्पष्टम्। अधीगर्थदयेशां कर्मणि इति सूत्रात् कर्मणि इति पदमनुवर्तते। सूत्रार्थो हि ब्राह्मणविषयकप्रयोगे दिवस्तदर्थस्य कर्मणि षष्ठी स्यात् इति। मन्त्रव्यतिरेको वेदभागो ब्राह्मणम्।

दिवस्तदर्थस्य इति सूत्रेण द्यूतार्थकस्य क्रयविक्रयरूपव्यवहारार्थकस्य च दिव्धातोः कर्मणि षष्ठी भवति यथा शतस्य दीव्यति इत्यत्र द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिव्धातोः प्रयोगः अस्ति। अत्र दिव्धातोः कर्म शतम् अस्ति। अतः दिवस्तदर्थस्य इत्यनेन षष्ठीविभक्तौ शतस्य इति प्रयोगः भवति।



किन्तु प्रकृते दिवस्तदर्थस्य इत्यनेन कर्मणि षष्ठीविभक्तेः प्राप्तौ तस्य बाधकः द्वितीया ब्राह्मणे इत्ययम योगः आरभ्यते। अतः तस्य अपवादः द्वितीया ब्राह्मणे इत्ययम् योगः।

**उदाहरणे सूत्रार्थसमन्वयः - गाम**स्य तदहः सभायां दीव्येयुः इत्युदाहरणे दिव्-धातोः कर्मणः गोशब्दात् द्वितीयाविभक्तिः भवति। न तु षष्ठी। यतो हि अत्र ब्राह्मणविषयकः प्रयोगः अस्ति। अपि च पणार्थकस्य व्यवहृर्थकस्य च दिव्-धातोः प्रयोगोऽपि वर्तते। किञ्च दिव्-धातुवाच्यक्रियायाः कर्म गौः वर्तते। लोके तु **गोः** तदहः सभायां दीव्येयुः इति प्रयोगः।

## १६.९) चतुर्थ्यर्थे बहुलं छन्दसि॥ (२.३.६३)

**सूत्रार्थः** - छन्दसि चतुर्थ्यर्थे बहुलं षष्ठी स्यात्।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् त्रीणि पदानि सन्ति, चतुर्थ्यर्थे बहुलं छन्दसि इति। चतुर्थ्यर्थे इति सप्तम्यन्तं पदम्। बहुलम् इति प्रथमान्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्। अत्र विषयसप्तमी वर्तते। षष्ठी शेषे इति सूत्रात् शेषे इति पदमनुवर्तते। ततश्च सूत्रार्थो भवति वेदे चतुर्थ्यर्थे बहुलं षष्ठी स्यात् इति। बहुलम् किम् इति उच्यते -

"क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य चातुर्विधं बाहुलकं वदन्ति॥" इति॥

तदर्थः - सूत्रोक्तकार्यस्य कुत्रचित् प्राप्तिः नास्ति चेदपि प्रवृत्तिः स्यात्। किञ्च कुत्रचित् प्राप्तिः अस्ति चेदपि न प्रवर्तते। अपि च क्वचित् विकल्पेन प्रवृत्तिः भवति। किञ्च कुत्रचिदन्यदेव भवति।

**उदाहरणम्-** गोधाकालकादार्वाखाटस्ते वनस्पतीनाम् इति।

**सूत्रार्थसमन्वयः** - पूर्वोक्ते उदाहरणे वनस्पतीनाम् इत्यत्र षष्ठी विभक्तिः वनस्पतिभ्यः इति चतुर्थ्यर्थे। तस्मात् गोधाकालकादार्वाखाटस्ते वनस्पतिभ्यः इत्येवम् अर्थः बोद्धव्यः। सूत्रे बहुलग्रहणात् वेदे षष्ठ्यर्थे चतुर्थ्यपि सङ्गच्छते। यथा या खर्वेन पिबति तस्यै खर्वः इत्यत्र **तस्यै** इति चतुर्थ्यन्तम् पदम् **तस्याः** इति षष्ठ्यर्थे प्रयुक्तम्।

## १६.१०) यजेश्च करणे॥ (२.३.६३)

**सूत्रार्थः** - यजेः करणे छन्दसि बहुलं षष्ठी स्यात्।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् त्रीणि पदानि सन्ति। यजेः च करणे इति सूत्रगतपदच्छेदः। यजेः इति षष्ठ्यन्तं पदम्। च इति अव्ययपदम्। करणे इति सप्तम्यन्तं पदम्। चतुर्थ्यर्थे बहुलं छन्दसि इति सूत्रात् बहुलम्, छन्दसि चेति पदे अनुवर्तेते। छन्दसि इत्यत्र वैषयिकसप्तमी। षष्ठी शेषे इति सूत्रात् शेषे इति पदमनुवर्तते। सूत्रार्थो हि यजेः करणकारके वेदविषये बहुलं षष्ठी स्यात् इति। बहुलम् किम् भवतीति तु पूर्वसूत्रे उक्तमेव।

**उदाहरणम्** - घृतस्य घृतेन वा यजते।

**सूत्रार्थसमन्वयः** - पूर्वोक्ते उदाहरणे यज्धातोः करणं भवति घृतम्। तस्मात् प्रकृतसूत्रेण घृतशब्दात् बाहुलकात् करणकारके षष्ठी विभक्तिः भवति। सूत्रे 'बहुलम्' इति पदस्यानुवृत्तौ षष्ठ्यभावपक्षे



तृतीयाविभक्तौ घृतेन यजते इत्यपि प्रयोगः। तेन **घृतस्य घृतेन वा यजते** इति प्रयोगः सिध्यति। लोके तु **घृतेन यजते** इत्येक एव प्रयोगो भवति।

## १६.११) बहुलं छन्दसि॥ (२.४.३९)

**सूत्रार्थः** - छन्दसि अदो घस्लृ इत्यादेशः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् द्वे पदे स्तः। बहुलम् इति प्रथमान्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्, अत्र वैषयिकसप्तमी। अदो जग्धिर्ल्यप्ति किति इति सूत्रात् अदः इति षष्ठ्यन्तम् पदमत्रानुवर्तते। लुङ्सनोर्घस्लृ इति सूत्रात् घस्लृ इत्यनुवर्तते। आर्धधातुके इति अधिकारः। सूत्रार्थस्तावत् वेदे अदः स्थाने घस्लृ-आदेशः बहुलं स्यात् आर्धधातुके परे इति। बहुलार्थः पूर्वोक्तः।

**उदाहरणम्** - सग्धिः।

**सूत्रार्थसमन्वयः** - अद्-धातोः स्त्रियां क्तिन् इत्यनेन क्तिन्-प्रत्यये अनुबन्धलोपे अद् ति इति स्थिते बहुलम् छन्दसि इति प्रकृतसूत्रेण अदः स्थाने घस्लृ इत्यादेशे अनुबन्धलोपे च घस् ति इति जाते घसिभसोर्हलि च इति सूत्रेण घसः उपधालोपे घ् स् ति इति जाते झलो झलि इत्यनेन सूत्रेण सकारस्य लोपे घ् ति इति जाते झषस्तथोर्धोऽधः इति सूत्रेण तकारस्य धकारे घ् धि इति जाते झलां जश् झशि इत्यनेन सूत्रेण घकारस्य स्थाने जशि गकारे ग्धि इति रूपं सिद्ध्यति। ततः समानशब्देन सह पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च इत्यनेन सूत्रेण समासे कृते समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु इत्यनेन सूत्रेण समानस्य स्थाने स इत्यादेशे **सग्धिः** इति रूपम् सिद्ध्यति।

## १६.१२) हेमन्तशिशिरावहोरात्रे च छन्दसि॥ (२.४.२८)

**सूत्रार्थः** - हेमन्तशिशिरौ, अहोरात्रे इत्येतयोः छन्दसि पूर्ववत् लिङ्गम् भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। हेमन्तशिशिरौ अहोरात्रे च छन्दसि इति सूत्रगतपदच्छेदः। हेमन्तशिशिरौ इति प्रथमान्तं पदम्। हेमन्तश्च शिशिरश्च हेमन्तशिशिरौ। अहोरात्रे इति प्रथमाद्विवचनान्तं पदम्। च इति अव्ययपदम्। छन्दसि इति सप्तम्येकवचनान्तं पदम्। पूर्ववदश्ववडवौ इति सूत्रात् पूर्ववत् इति पदमनुवर्तते। परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः इति सूत्रात् द्वन्द्वः इति पदमनुवर्तते। सूत्रार्थो भवति वेदे द्वन्द्वसमासनिष्पन्नयोः हेमन्तशिशिरौ अहोरात्रे इति एतयोः शब्दयोः पूर्ववत् लिङ्गं स्यात् इति। पूर्ववत् इत्यस्य पूर्वपदवत् इत्यर्थः।

**उदाहरणे सूत्रार्थसमन्वयः** - अहश्च रात्रिश्च इति विग्रहे द्वन्द्वसमासे सति अहः सर्वैकदेशसंख्यातपुण्याच्च रात्रेः इति सूत्रेण समासान्ते अच्प्रत्यये अहोरात्रि अ इति स्थिते यस्येति च इति सूत्रेण इकारस्य लोपे अहोरात्र इति जायते। ततः रात्राह्नाहाः पुंसि इति सूत्रेण रात्रादिशब्दानां पुंसि व्यवहारो विधीयते इत्यतः **अहोरात्रौ** इति रूपं सिद्ध्यति इति वेदे। परन्तु वेदे अहन् इति पूर्वपदस्य नपुंसकलिङ्गकत्वात् **अहोरात्रे** इति रूपं भवति। तथा च प्रयोगः अहोरात्रे इदं ब्रूमः इति। न केवलम् द्विवचने अयम् नियमः। अपि तु बहुत्वविवक्षायामपि पूर्वपदवत् लिङ्गं भवितुमर्हति। तदुदाहरणं हि अहोरात्राणि विदधत् इति।



हेमन्तश्च शिशिरश्च हेमन्तशिशिरौ। हेमन्तशब्दस्य पुंलिङ्गत्वात् **हेमन्तशिशिरौ** इति रूपं जायते इति वेदे। किन्तु लोके **हेमन्तशिशिरे** इति प्रयोगः। किन्तु हेमन्तः शिशिरोऽस्त्रियाम् इत्यमरवचनात् शिशिरशब्दस्य अस्त्रियाम् अर्थात् पुंसि स्त्रियां च प्रयोगो दृश्यते। तथा च शिशिरशब्दस्य पुंलिङ्गपक्षे सूत्रस्य वैयर्थ्यापत्तिः। नपुंसके व्यवह्रियते चेत् समस्तपदस्य परवल्लिङ्गम् स्यात् अर्थात् नपुंसकम् स्यात् तन्निवृत्तये प्रकृतसूत्रम् आवश्यकम्।

## १६.१३) बहुलं छन्दसि॥ (२.४.७३)

**सूत्रार्थः** - छन्दसि अदिप्रभृतिभ्यः विहितस्य शपः बहुलं लुक् स्यात्।

**सूत्रव्याख्या** - सूत्रमिदम् विधिसूत्रम्। अस्मिन् सूत्रे द्वे पदे स्तः। बहुलम् छन्दसि इति सूत्रगतपदच्छेदः। बहुलम् इति प्रथमान्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्, अत्र वैषयिकसप्तमी। अदिप्रभृतिभ्यः शपः इति सम्पूर्णं सूत्रमत्रानुवर्तते। ण्यक्षत्रियार्षञितो यूनि लुगणिञोः इति सूत्रात् लुक् इति पदमनुवर्तते। सूत्रार्थस्तावत् वेदे अदिप्रभृतिभ्यः विहितस्य शपः बहुलं लुक् स्यात् इति। बहुलार्थः उक्तः एवास्ति।

**उदाहरणम्** - शयते।

**सूत्रार्थसमन्वयः** - शी-धातोः लट्-लकारे शी ल् इति स्थिते लस्य स्थाने तकारादेशे शी त इति जाते कर्तरि शप् इत्यनेन शप्-प्रत्यये शी अ त इति जाते अदिप्रभृतिभ्यः शपः इत्यनेन शपः लुकि प्राप्ते प्रकृतसूत्रेण तन्निषेधे शी अ त इति जाते शीङः सार्वधातुके गुणः इत्यनेन ईकारस्य गुणे एकारे शे अ त इति जाते एचोऽयवायावः इत्यनेन एकारस्य स्थाने अयादेशे शय् अ त इति जाते टित आत्मनेपदानां टेरे इत्यनेन टेः तकारोत्तराकारस्य एकारे सर्ववर्णसम्मेलने **शयते** इति रूपम् सिध्यति। लोके तु **शेते** इति रूपम्।

## १६.१४) बहुलं छन्दसि॥ (२.४.७६)

**सूत्रार्थः** - छन्दसि जुहोत्यादिभ्यः विहितस्य शपः बहुलं श्लुः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् द्वे पदे स्तः। बहुलम्, छन्दसि इति सूत्रगतपदच्छेदः। बहुलम् इति प्रथमान्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्, अत्र वैषयिकसप्तमी। अदिप्रभृतिभ्यः शपः इति सूत्रात् शपः इति पदमनुवर्तते। जुहोत्यादिभ्यः श्लुः इति सम्पूर्णं सूत्रमत्रानुवर्तते। सूत्रार्थो हि छन्दसि विषये जुहोत्यादिभ्यः विहितस्य शपः श्लुः बहुलम् स्यात् इति। अर्थात् शपः स्थाने विहितोऽपि श्लुः आदेशः कदाचित् न भवति। कदाचित् च शपः स्थाने अविहितोऽपि श्लुः आदेशो भवति इति सूत्रे बहुलग्रहणस्य अयम् आशयः।

**उदाहरणम्** - दाति प्रियाणि चिद्वसु (ऋ.७.१६.११)।

**सूत्रार्थसमन्वयः** - दाधातोः लट्-लकारे दा ल् इति स्थिते लकारस्य स्थाने तिबादेशेऽनुबन्धलोपे दा ति इति जाते शपि कृते जुहोत्यादिभ्यः श्लुः इत्यनेन शपः श्लौ श्लौ इत्यनेन दा इत्यस्य दित्वे दा दा ति इति जाते द्विरुक्तस्य पूर्वभागस्य पूर्वोऽभ्यासः इत्यनेन अभ्याससंज्ञायां ह्रस्वः



इत्यनेन अभ्यासस्य अचः ह्रस्वे द दा ति इति जाते सर्ववर्णसम्मेलने **ददाति** इति रूपं सिध्यति इति लोके। प्रकृतसूत्रेण शपः श्लुः न भवति चेत् श्लौ इति सूत्रस्य नैव अवसरः तेन **दाति** इति रूपम् सिध्यति इति वेदे।

## १६.१५) कृमृदुरुहिभ्यश्छन्दसि॥ (३.१.५९)

**सूत्रार्थः** - कृ-मृदु-रुहिभ्यः धातुभ्यः च्लेः अङ् आदेशः वा छन्दसि कर्तरि।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् द्वे पदे स्तः। कृमृदुरुहिभ्यः छन्दसि सूत्रगतपदच्छेदः। कृमृदुरुहिभ्यः इति पञ्चमीबहुवचनान्तम्। छन्दसि इति सप्तम्यन्तं पदम्, अत्र वैषयिकसप्तमी। च्लि लुङि इत्यतः च्लिः इति, अस्यतिवक्तिख्यादिभ्योऽङ् इत्यतः अङ् इति, इरितो वा इत्यतः वा इति च अनुवर्तन्ते। धातोरेकाचो हलादेः क्रियासमभिहारे यङ् इति सूत्रतः धातोः इत्यनुवर्तते। तच्च पञ्चमीबहुवचनान्ततया विपरिणमते। च्लेः सिच् इत्यतः च्लेः इत्यपि अनुवर्तते। सूत्रार्थो हि वेदे कर्त्रर्थे कृमृदुरुहिभ्यः धातुभ्यः विहितस्य च्लेः स्थाने अङ् आदेशो विकल्पेन भवति इति सूत्रार्थः।

**उदाहरणम्** - इदं तेभ्योऽकरं नमः।

**सूत्रार्थसमन्वयः** - पूर्वोक्ते उदाहरणे अकरवम् इत्यत्र कृधातोः लुङि लुङः स्थाने मिप्-आदेशे मेः स्थाने अम्-आदेशे कृ अम् इति स्थिते धातोः अट् आगमे अनुबन्धलोपे अ कृ अम् इति जाते च्लि लुङि इति च्लौ प्रकृतसूत्रेण च्लेः स्थाने अङादेशे अनुबन्धलोपे ऋदृशोऽङि गुणः इत्यनेन धातोः ऋकारस्य गुणे अकारे उरण् रपरः इति रपरत्वे **अकरम्** इति रूपम् सिध्यति। लोके च्लेः सिचि **अकार्षम्** इति रूपम् जायते। एवम् मृधातोः तिपि वेदे **अमरत्**, लोके तु **अमृत** इति रूपम्। दृधातोः तिपि वेदे **अदरत्**, लोके तु **अदारीत्** इति रूपम्। रुह् धातोः तिपि वेदे **आरुहत्**, लोके तु **अरुक्षत्** इति रूपम्।



## पाठगतप्रश्नाः- २

९. जुहोतेः कर्मणि तृतीयाद्वितीययोः वैकल्पिकविधानं केन सूत्रेण भवति।
१०. द्वितीया ब्राह्मणे इत्यत्र कीदृशी सप्तमी।
११. द्वितीया ब्राह्मणे इति कस्य अपवादः।
१२. चतुर्थ्यर्थे बहुलं छन्दसि इत्यस्मिन् सूत्रे चतुर्थ्यर्थे कस्याः विभक्तेः विधानं भवति।
१३. घृतस्य यजते इत्यत्र षष्ठीविधायकं सूत्रं किम्।
१४. अहोरात्रे इत्यत्र पूर्ववल्लिङ्गविधायकं सूत्रं किम्।
१५. बहुलं छन्दसि इत्यनेन केषां शपः बहुलं लुक् भवति।
१६. छन्दसि जुहोत्यादिभ्यः शपः बहुलं श्लुविधायकं सूत्रं किम्।
१७. बहुलं छन्दसि इत्यनेन केषां शपः बहुलं श्लुः भवति।
१८. अमरत् इत्यस्य लौकिकम् रूपम् किम्।
१९. अकरम् इत्यस्य लौकिकम् रूपम् किम्।



२०. कृमृदुरुहिभ्यश्छन्दसि इति सूत्रेण च्लेः स्थाने किम् विधीयते सिच् अङ् वा।



## पाठसारः

एतवता भवन्तः दृष्टवन्तः यत् - छन्दसि नक्षत्रवाचकात् पुनर्वसुशब्दात् विशाखशब्दात् च द्वित्वे वाच्ये विकल्पेन एकवचनम् भवति, लोके तु द्विवचनमेव। छन्दसि अयस्मयादीनि पदानि निपात्यन्ते। गतिसंज्ञकाः उपसर्गसंज्ञकाः च शब्दाः व्यवधानेन धातोः परे पूर्वे वा भवन्ति। छन्दसि हु धातोः कर्मणि तृतीयापि भवति। छन्दसि चतुर्थ्यर्थे बहुलं षष्ठ्याः अपि प्रयोगो भवति। किञ्च यज् धातोः करणे बहुलं षष्ठीविभक्तिः अपि भवति। छन्दसि अद् धातोः बहुलं घस्लृ इत्यादेशः भवति। छन्दसि अदिप्रभृतिभ्यः विहितस्य शपः बहुलं लुक् भवति। छन्दसि जुहोत्यादिभ्यः विहितस्य शपः बहुलं लुक् भवति। किञ्च षष्ठीयुक्तश्छन्दसि इत्यस्य योगविभागः प्रदर्शितः। तेन च योगविभागेन सर्वे विधयश्छन्दसि विकल्प्यन्ते इति परिभाषा ज्ञापिता। ततः वेदे सर्वोऽपि विधिः विकल्पेन भवति इति आयातम्।



## पाठान्तप्रश्नाः

१. षष्ठीयुक्तश्छन्दसि इति सूत्रं व्याख्यात।
२. अयस्मयादीनि छन्दसि इति सूत्रं व्याख्यात।
३. छन्दसि परेऽपि व्यवहिताश्च इत्यनयोः व्याख्या कार्या।
४. चतुर्थ्यर्थे बहुलं छन्दसि इति सूत्रं व्याख्यात।
५. कृमृदुरुहिभ्यश्छन्दसि इति सूत्रं व्याख्यात।
६. सग्धिः इति रूपं साधयत।
७. शयते इति रूपं साधयत।
८. दाति इति रूपं साधयत।
९. पतिना इत्यत्र कथम् पतिशब्दस्य घिसंज्ञा।
१०. द्वितीया ब्राह्मणे इत्यस्य व्याख्या कार्या।



## पाठगतप्रश्नानाम् उत्तराणि

१. छन्दसि पुनर्वस्वोः नक्षत्रयोः द्वित्वे एकवचनम् विकल्पेन स्यात् इत्यर्थः।
२. षष्ठीयुक्तश्छन्दसि वा।
३. व्यवहिताश्च इत्यनेन सूत्रेण।
४. 'विशाखा' इति नक्षत्रस्य नामानुसारं 'वैशाख' इति मासस्य नामकरणं जातम्।



५. छन्दसि विषये गतिसंज्ञकाः उपसर्गसंज्ञकाः च धातोः परे अपि स्युः इति।
६. सर्वे विधयश्छन्दसि विकल्प्यन्ते।
७. षष्ठ्यन्तेन युक्तः पतिशब्दः छन्दसि घिसंज्ञो वा स्यात्।
८. न भवति।
९. तृतीया च होश्छन्दसि।
१०. विषयसप्तमी।
११. दिवस्तदर्थस्य।
१२. षष्ठ्याः।
१३. यजेश्च करणे।
१४. हेमन्तशिशिरावहोरात्रे च छन्दसि इत्यनेन।
१५. अदिप्रभृतिभ्यः।
१६. बहुलं छन्दसि।
१७. जुहोत्यादिभ्यः शपः बहुलं श्लुः भवति।
१८. अमृत।
१९. अकार्षीत्।
२०. अङ्।

## इति षोडशः पाठः



१७

# अष्टाध्याय्याः तृतीयः अध्यायः

## प्रस्तावना

पूर्वस्मिन् पाठे भवन्तः केषाञ्चन वैदिकशब्दानाम् प्रयोगम् प्रक्रियाम् च ज्ञातवन्तः। अत्र पाठे इन्, ण्वि, ञ्युट्, विट्, विच्, क्विप् इत्यादिप्रत्ययानाम् प्रयोगः प्रदर्शयिष्यते। किञ्च केचित् निपातनसिद्धशब्दाः अपि आलोचयिष्यन्ते। दश लकारा भवन्ति। तेषु लेट्-लकारस्य प्रयोगो वेदे भवति इति भवन्तः जानन्ति एव। अस्य पाठस्य अन्ते लेट्लकारसम्बन्धिनी चर्चा करिष्यते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- धातोः परे इन्, ण्वि, ञ्युट्, विट्, विच्, क्विप् इत्यादिप्रत्ययाः कदा भवति तद्विषये ज्ञास्यति।
- कांश्चन निपातनेन सिद्धान् शब्दान् ज्ञास्यति।
- लेट्-लकारस्य विशेषताम् अवगमिष्यति।
- छन्दसि लेट्-लकारे रूपप्रक्रियाम् बुध्यात्।।

## १७.१) छन्दसि निष्टर्क्यदेवहूय-प्रणीयोन्नीयोच्छिष्य-मर्यस्तर्याध्वर्य-खन्यखान्य-देवयज्यापृच्छ्यप्रतिषीव्य-ब्रह्मवाद्यभाव्य-स्ताव्योपचाय्य-पृडानि॥ (३.१.१२३)

**सूत्रार्थः** - निष्टर्क्यादयः शब्दाः छन्दसि निपात्यन्ते।

**सूत्रावतरणम्** - छन्दसि निष्टर्क्य-देवहूय-प्रणीय-उन्नीय-उच्छिष्य-मर्य-स्तर्या-ध्वर्य-खन्य-खान्य-देवयज्या-अपृच्छ्य-प्रतिषीव्य-ब्रह्मवाद्य-भाव्य-स्ताव्य-उपचाय्य-पृड शब्दानां निपातनार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण उक्तपदानि निपात्यन्ते। अस्मिन् सूत्रे द्वे पदे स्तः। तत्र छन्दसि इति सप्तम्येकवचनान्तं पदम्। निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्य-भाव्यस्ताव्योपचाय्यपृडानि इति प्रथमाबहुवचनान्तं पदम्। निपात्यन्ते इति अध्याह्रियते। निपातनं नाम किमिति चेत् सिद्धप्रक्रियस्य निर्देशो हि निपातः। ततश्च सूत्रार्थो भवति छन्दसि निष्टर्क्य-देवहूय-प्रणीय-



उन्नीय-उच्छिष्य-मर्य-स्तर्या-ध्वर्य-खन्य-खान्य-देवयज्या-अपृच्छय-प्रतिषीव्य-ब्रह्मवाद्य-भाव्य-स्ताव्य-उपचाय्य-पृड-शब्दाः निपात्यन्ते इति।

**उदाहरणम् -**

एतेषाम् उदाहरणानि यथा "निष्टर्क्यं चिन्वीत पशुकामः"। "स्पर्धन्ते वा उ देवहूये"। "आपृच्छ्यं धरुणं वाज्यर्षति"। इत्यादीनि।

तत्र **निष्टर्क्य** इत्यत्र निस्-पूर्वक-कृत्-धातोः क्यप्प्रत्यये प्राप्ते निपातनात् ण्यत्प्रत्यये ऋकारस्य गुणे रपरत्वे निस् कर् त् य इत्यवस्थायाम् आद्यन्तवर्णद्वयस्य विपर्यये अर्थात् ककारतकारयोः विपर्यये निस् तर् क् य इति जाते सस्य षत्वे तकारस्य च टकारे निष्टर्क्य इति रूपम्। लोके **निष्कृत्य** इति रूपं भवति।

**देवहूयः-** देवानां ह्वानं हवनं वा इति विग्रहे देवशब्दपूर्वकात् ह्वेधातोः हूधातोः वा क्यप्प्रत्यये दीर्घे निपातनात् तुगभावे **देवहूयः** इति रूपं भवति।

**प्रणीयः-** प्रपूर्वकात् णीधातोः क्यप्प्रत्यये प्रणीय इति रूपम्। लोके तु यत्प्रत्यये **प्रणेय** इति रूपं भवति।

**उन्नीयः-** उत्पूर्वकात् नीधातोः क्यप्प्रत्यये रूपमिदम्। लोके तु **उन्नेयः** इति रूपं भवति।

**उच्छिष्यम्-** उत्पूर्वकात् शिष्-धातोः क्यप्प्रत्यये उच्छिष्यम् इति रूपम्। लोके तु **उच्छेष्यम्** इति रूपं भवति।

**मर्यः-** मृधातोः यत्प्रत्यये रूपमिदम्। लोके तु ण्यत्प्रत्यये **मार्यः** इति रूपं भवति।

**स्तर्या-** स्तृधातोः यत्प्रत्यये स्त्रियां टापि स्तर्या इति रूपम्। इदं रूपं स्त्रीलिङ्गान्ततया निपात्यते। लोके तु स्तृधातोः ण्यत्प्रत्यये **स्तार्यः** इति रूपं भवति।

**ध्वर्यः-** ध्वृधातोः यत्प्रत्यये ध्वार्यः इति रूपम्। लोके तु ण्यत्प्रत्यये **ध्वार्यः** इति रूपं भवति।

**खन्यः, खान्यः-** खन्धातोः यत्प्रत्यये खन्यः इति रूपम्। खन्धातोः ण्यत्प्रत्यये खान्यः इति रूपम्। लोके तु उभयत्र यत्प्रत्यये **खेयः** इति रूपं भवति।

**देवयज्या-** देवानां यजनम् इति व्युत्पत्त्या देवोपपदक-यज्धातोः यति स्त्रियां टापि रूपमिदम्। लोके **इज्या** इति रूपं भवति।

**अपृच्छयः-** आङ्पूर्वक-प्रच्छ्-धातोः क्यप्रत्यये रूपमिदम्। लोके तु ण्यत्प्रत्यये **आप्राच्छयः** इति रूपं भवति।

**प्रतिषीव्यः-** प्रतिपूर्वकसिव्-धातोः क्यप्रत्यये सस्य षत्वे इकारस्य हलि च इत्यनेन दीर्घे प्रतिषीव्य इति रूपम्। लोके तु **प्रतिषेव्यः** इति रूपं भवति।

**ब्रह्मवाद्यम्-** ब्रह्मणः वेदस्य वदनम् इति विग्रहे ब्रह्मन्नुपपदक-वद्-धातोः ण्यति रूपमिदम्। लोके क्यप्प्रत्यये यत्प्रत्यये वा **ब्रह्मोद्यम्, ब्रह्मवद्यं** चेति रूपद्वयं भवति।

**भाव्यः, स्ताव्यः-** भूधातोः स्तुधातोः ण्यति यथाक्रमं भाव्यः स्ताव्यः इति रूपद्वयं भवति। लोके तु भूधातोः यत्प्रत्यये **भव्यः** इति, स्तुधातोः क्यप्प्रत्यये **स्तुत्यः** इति रूपद्वयं भवति।



**उपचाय्यपृडम्-** पृडयति सुखयति इति विग्रहे पृड्-धातोः क्यप्प्रत्यये **पृडः** इति रूपम्। उपचाय्यं च तत् पृडम् च इति विग्रहे कर्मधारयसमासे **उपचाय्यपृडम्** इति रूपम्। अत्र पृड इति उत्तरपदे परतः उपपूर्वकचिधातोः ण्यत्प्रत्यये अयादेशः निपात्यते।

## १७.२) छन्दसि वनसनरक्षिमथाम्॥ (३.२.२७)

**सूत्रार्थः** - एभ्यः कर्मण्युपपदे इन् स्यात्।

**सूत्रावतरणम्** - छन्दसि वन्-धातोः सन्-धातोः रक्ष्-धातोः मथ्-धातोः च कर्मणि उपपदे इन्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण इन्-प्रत्ययः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। छन्दसि इति सप्तम्येकवचनान्तं पदम्। वनसनरक्षिमथाम् इति षष्ठीबहुवचनान्तं पदम्। अत्र पञ्चम्यर्थे षष्ठी बोद्धव्या। स्तम्बशकृतोरिन् इति सूत्रात् इन् इति अनुवर्तते। कर्मणि भृतौ इति सूत्रात् कर्मणि इत्यनुवर्तते। धातोः प्रत्ययः परः चेति अधिकृतमस्ति। धातोः इत्यस्य धातुभ्यः इति पञ्चमीबहुवचनान्ततया विपरिणामः। तदा छन्दसि वनसनरक्षिमथ् इत्येतेभ्यः धातुभ्यः कर्मणि इन् प्रत्ययः परः इति वाक्ययोजना। सूत्रार्थो हि छन्दसि वन्-धातोः सन्-धातोः रक्ष्-धातोः मथ्-धातोः च कर्मणि उपपदे इन्-प्रत्ययः परः स्यादिति। तत्र वन्-धातोः याचनम् अर्थः। सन्-धातुः दानार्थकः। रक्ष्-धातुः पालनार्थवाची। मथ्-धातुः विलोडनार्थकः।

**उदाहरणम्** - ब्रह्मवनिं त्वा क्षत्रवनिम् इति वेदे प्रयोगः। तत्र ब्रह्म वनति इति व्युत्पत्तौ कर्मण्युपपदे प्रकृतसूत्रेण याचनार्थकात् वन्-धातोः इन्-प्रत्यये प्रक्रियया ब्रह्मन् वन् इन् इति स्थिते अनुबन्धलोपे ब्रह्मन् वन् इ इति स्थिते नलोपः प्रातिपदिकान्तस्य इत्यनेन प्रातिपदिकान्तस्य ब्रह्मन् इत्यस्य नकारस्य लोपे ब्रह्म वन् इ इति स्थिते सम्पूर्णस्य ब्रह्मवनि इति जाते उपपदसमासे प्रातिपदिकसंज्ञायां द्वितीयैकवचनविवक्षायाम् अमि ब्रह्मवनि अम् इति स्थिते अमि पूर्वः इत्यनेन पूर्वरूपैकादेशे **ब्रह्मवनिम्** इति रूपम्। क्षत्रवनिमपि तथैव। गोषणिं पथिरक्षी हविर्मथिः इत्यादीनि उदाहरणान्तराणि।

## १७.३) छन्दसि सहः॥ (३.२.६३)

**सूत्रार्थः** - सुप्युपपदे सहेर्ण्विः स्यात्।

**सूत्रावतरणम्** - सुबन्ते उपपदे सह्-धातोः ण्वि-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण ण्विप्रत्ययः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। तत्र छन्दसि इति सप्तम्येकवचनान्तं पदम्। सहः इति पञ्चम्येकवचनान्तं पदम्। भजो ण्विः इति सूत्रात् ण्विः इत्यनुवर्तते। सुपि इत्यस्य अनुवृत्तिः भवति। धातोः प्रत्ययः परः चेति अधिकृतमस्ति। छन्दसि सहः धातोः ण्विः प्रत्ययः सुपि इति वाक्ययोजना। सूत्रार्थो हि छन्दसि सह्-धातोः सुबन्ते उपपदे ण्वि-प्रत्ययः परः स्यात् इति। सह्-धातोः च अर्थः भवति मर्षणम् इति।

**उदाहरणम्** -



पृतनाषाट् इत्युदाहरणम्। पृतनां सहते इति व्युत्पत्तौ सुबन्तोपपदे सह्-धातोः प्रकृतसूत्रेण ण्वि-प्रत्यये पृतना सह् ण्वि इति स्थिते अनुबन्धलोपे पृतना सह् इति स्थिते अत उपधायाः इत्यनेन उपधावृद्धौ पृतना साह् इति स्थिते उपपदसमासे प्रातिपदिकसंज्ञायां सौ अनुबन्धलोपे पृतनासाह् स् इति स्थिते हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् इत्यनेन सकारलोपे हो ढः इत्यनेन हस्य ढकारे पृतनासाढ् इति स्थिते झलां जशोऽन्ते इत्यनेन ढकारस्य डकारे अवसानसंज्ञायां वावसाने इत्यनेन डकारस्य टकारे **पृतनाषाट्** इति रूपम्।

## १७.४) वहश्च॥ (३.२.६४)

**सूत्रार्थः** - छन्दसि सुप्युपपदे वहः ण्विः स्यात्।

**सूत्रावतरणम्** - सुबन्तोपपदे वहः धातोः ण्वि-प्रत्ययविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्यख्या** - सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण सुबन्तोपपदे वहः धातोः ण्वि-प्रत्ययः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। वहः च इति सूत्रगतपदच्छेदः। वहः इति पञ्चम्येकवचनान्तं पदम्। च इति अव्ययपदम्। भजो ण्विः इति सूत्रात् ण्विः इत्यनुवर्तते। छन्दसि सहः इति सूत्रात् छन्दसि इत्यनुवर्तते। सुपि इत्यस्य अनुवृत्तिः भवति। धातोः प्रत्ययश्चेति अधिकृतमस्ति। छन्दसि वहः धातोः ण्विः प्रत्ययः सुपि इति वाक्ययोजना। ततश्च सूत्रर्थः भवति छन्दसि सुबन्तोपपदे वह्-धातोः ण्वि-प्रत्ययः स्यात् इति।

**उदाहरणम्** - दित्यवाट् इत्युदाहरणम्।

**सूत्रार्थसमन्वयः** - दित्यं वर्षद्वयं वहति इति विग्रहे सुबन्तोपपदे वह्-धातोः प्रकृतसूत्रेण ण्वि-प्रत्यये अनुबन्धलोपे दित्य वह् इति स्थिते अत उपधायाः इत्यनेन उपधावृद्धौ दित्य वाह् इति जाते उपपदसमासे प्रातिपदिकसंज्ञायां सौ अनुबन्धलोपे दित्यवाह् स् इति जाते हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् इत्यनेन सकारलोपे हो ढः इत्यनेन हस्य ढकारे दित्यवाढ् इति जाते झलां जशोऽन्ते इत्यनेन ढकारस्य डकारे वावसाने इत्यनेन डकारस्य टकारे **दित्यवाट्** इति रूपम् सिध्यति।

## १७.५) हव्येऽनन्तःपादम्॥ (३.२.६६)

**सूत्रार्थः** - हव्ये सुपि चोपपदे छन्दसि अनन्तःपादं वहः ञ्युट्।

**सूत्रावतरणम्** - हव्ये उपपदे सुबन्तोपपदे च छन्दसि अनन्तःपादं वहः ञ्युट्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण ञ्युट्-प्रत्ययः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। हव्ये अनन्तःपादम् इति सूत्रगतपदच्छेदः। हव्ये इति सप्तम्येकवचनान्तं पदम्। अनन्तःपादम् इति प्रथमैकवचनान्तं पदम्। अन्तः मध्ये पादस्येति अन्तःपादम् इति अव्ययीभावसमासः। न अन्तःपादम् अनन्तःपादम् इति नञ्तत्पुरुषसमासः। वहश्च इति सूत्रात् वहः इत्यनुवर्तते। छन्दसि सहः इति सूत्रात् छन्दसि इत्यनुवर्तते। काव्यपुरीषपुरीष्येषु ञ्युट् इति सूत्रात् ञ्युट् इत्यनुवर्तते। सुपि इत्यनुवर्तते। धातोः प्रत्ययः परः चेति अधिकृतम्। भवति इति अध्याह्रियते। तदा च वाक्ययोजना भवति हव्ये सुपि छन्दसि अनन्तःपादं वहः धातोः ञ्युट् प्रत्ययः परः इति। सूत्रार्थस्तावत् हव्ये उपपदे सुबन्तोपपदे च छन्दसि



अनन्तःपादं वह्-धातोः ञ्युट्-प्रत्ययः भवति इति। अर्थात् हव्ये उपपदे सुबन्तोपपदे च छन्दसि वह्-धातोः ञ्युट्-प्रत्ययः भवति पादयोर्मध्यस्थे तु न भवति इति। अपि तु पादमध्ये वहश्च इत्यनेन ण्विरेव भवति।

**उदाहरणम्** - अग्निश्च हव्यवाहनः इति वैदिकप्रयोगः।

**सूत्रार्थसमन्वयः** - तत्र हव्यवाहनः इत्यत्र हव्यं वहति इति विग्रहे हव्योपपदे वह्-धातोः प्रकृतसूत्रेण ञ्युट्-प्रत्यये अनुबन्धलोपे हव्य वह् यु इति स्थिते अत उपधायाः इत्यनेन उपधावृद्धौ हव्य वाह् यु इति जाते युवोरनाकौ इत्यनेन यु इत्यस्य अनादेशे संयोगे सम्पूर्णस्य हव्यवाहन इत्यस्य उपपदसमासे प्रातिपदिकसंज्ञायां सौ विभक्तिकार्ये **हव्यवाहनः** इति रूपम् सिध्यति।

## १७.६) जनसनखनक्रमगमो विट्॥ (३.२.६७)

**सूत्रार्थः** - उपसर्गे सुपि चोपपदे एभ्यश्छन्दसि विट्। (शेखरः)

**सूत्रावतरणम्** - उपसर्गे उपपदे सुपि उपपदे च जन्-धातोः सन्-धातोः खन्-धातोः क्रम्-धातोः गम्-धातोः च विट्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण विट्-प्रत्ययः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। जनसनखनक्रमगमः इति पञ्चम्येकवचनान्तं पदम्। विट् इति प्रथमान्तं पदम्। छन्दसि सहः इति सूत्रात् छन्दसि इत्यनुवर्तते। उपसर्गे सुपि चेत्यपि अनुवर्तते। धातोः प्रत्ययः परः चेति अधिकृतमस्ति। उपसर्गे सुपि जनसनखनक्रमगमः धातोः विट् प्रत्ययः परः इति वाक्ययोजना। ततश्च सूत्रार्थः भवति उपसर्गे उपपदे सुबन्तोपपदे च जन्-धातोः सन्-धातोः खन्-धातोः क्रम्-धातोः गम्-धातोः च विट्-प्रत्ययः परः स्यादिति।

**उदाहरणम्** - अब्जः।

**सूत्रार्थसमन्वयः**- अप्सु जायते इति विग्रहे अप्सु इति सुबन्तोपपदे प्रकृतसूत्रेण विट्-प्रत्यये अप् जन् विट् इति स्थिते विटः सर्वापहारलोपे अप् जन् इति स्थिते विट्-वनोरनुनासिकस्यात् इति सूत्रेण नकारस्य आकारादेशे अप् ज आ इति स्थिते सवर्णदीर्घे अप् जा इति स्थिते झलां जशोऽन्ते इत्यनेन पकारस्य बकारादेशे संयोगे निष्पन्नस्य अब्जा इत्यस्य उपपदसमासे प्रातिपदिकसंज्ञायां सौ विभक्तिकार्ये **अब्जाः** इति रूपम्। एवं **गोजाः गोषाः** इत्यादीन्युदाहरणानि।

## १७.७) मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्॥ (३.२.७१)

**सूत्रार्थः** - मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् स्यात्।

**सूत्रावतरणम्** - मन्त्रे श्वेतवह् उक्थशस् पुरोडाश् इति सूत्रपठितशब्देभ्यः ण्विन्-प्रत्ययविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण ण्विन्-प्रत्ययः विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। मन्त्रे इति सप्तम्येकवचनान्तं पदम्। श्वेतवहोक्थशस्पुरोडाशः इति पञ्चम्येकवचनान्तं पदम्। ण्विन् इति प्रथमान्तं पदम्। प्रत्ययः परः चेति अधिकृतमस्ति। ततश्च सूत्रार्थो भवति मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् प्रत्ययः परः स्यात् इति।



**उदाहरणम्** - श्वेतवाहौ इत्युदाहरणम्।

**सूत्रार्थसमन्वयः** - प्रकृतसूत्रेण श्वेतवह्-शब्दात् ण्वि-प्रत्यये अनुबन्धलोपे श्वेतवह् इति स्थिते अतो उपधायाः इत्यनेन उपधावृद्धौ श्वेतवाह् इति जाते उपपदसमासे प्रातिपदिकसंज्ञायाम् औ-प्रत्यये सर्ववर्णसम्मेलने **श्वेतवाहौ** इति रूपम्। एवं **श्वेतवाहः** इत्यादि उदाहरणम् स्वयम् बोद्धव्यम्।



## पाठगतप्रश्नाः-१

१. निपातनं नाम किम्।
२. वन्-धातोः अर्थः कः।
३. पृतनां सहते इति अर्थे किं रूपं भवति।
४. दित्यवाढ् इति स्थिते ढकारस्य डकारः केन सूत्रेण भवति।
५. छन्दसि वनसनरक्षिमथाम् इत्यस्य कोऽर्थः।
६. ञ्युट्-प्रत्ययः केन विधीयते।
७. ण्विप्रत्ययविधायकं सूत्रमेकं लिखत।
८. वहश्च इत्यस्य कोऽर्थः।

## १७.८) अवे यजः॥ (३.२.७२)

**सूत्रार्थः** - अवे उपपदे यज्-धातोः मन्त्रे ण्विन् स्यात्।

**सूत्रावतरणम्** - मन्त्रे अवे उपपदे यज्-धातोः ण्विन्-प्रत्ययविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण अवे उपपदे यज्-धातोः ण्विन् विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। अवे इति सप्तम्येकवचनान्तं पदम्। यजः इति पञ्चम्येकवचनान्तं पदम्। मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् इति सूत्रात् मन्त्रे ण्विन् चेति पदद्वयमनुवर्तते। धातोः प्रत्ययः परः अधिकृतमस्ति। तदा च मन्त्रे अवे यजः धातोः ण्विन् प्रत्ययः परः इति वाक्ययोजना। ततश्च सूत्रार्थः भवति मन्त्रे अवे उपपदे यज्-धातोः ण्विन्-प्रत्ययः परः स्यात् इति।

**उदाहरणम्** - अवयाजौ।

**सूत्रार्थसमन्वयः**- अवे उपपदे यज्-धातोः प्रकृतसूत्रेण ण्विन्प्रत्यये ण्विन्-प्रत्ययस्य सर्वापहारलोपे अव यज् इति स्थिते यज्-धातोः अकारस्य अलोऽन्त्यात्पूर्व उपधा इत्यनेन उपधासंज्ञायाम् अत उपधायाः इत्यनेन उपधायाः अकारस्य वृद्धौ स्थानतः आन्तर्यात् आकारे अव याज् इति स्थिते संयोगे उपपदसमासे कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां ततश्च ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्

इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमाद्विवचनविवक्षायाम् औ-प्रत्यये सर्ववर्णसम्मेलने **अवयाजौ** इति रूपम्।

## १७.९) अवयाः श्वेतवाः पुरोडाश्च॥ (८.२.६७)

**सूत्रार्थः** - एते सम्बुद्धौ कृतदीर्घाः निपात्यन्ते।

**सूत्रावतरणम्** - संबुद्धौ परे अवयाः श्वेतवाः पुरोडाः इत्येतेषां कृतदीर्घाणां शब्दानां निपातनार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। अवयाः श्वेतवाः पुरोडाः च इति सूत्रगतपदच्छेदः। अवयाः श्वेतवाः पुरोडाः चेति पदत्रयं प्रथमैकवचनान्तम्। च इति अव्ययपदम्। संबुद्धौ इति पदं लभ्यते। चकारबलात् उक्थशाः इत्यस्यापि ग्रहणं भवति। तदा च अवयाः श्वेतवाः पुरोडाः उक्थशाः च संबुद्धौ इति वाक्ययोजना। ततश्च सूत्रार्थः भवति सम्बुद्धौ कृतदीर्घाः अवयाः श्वेतवाः पुरोडाः उक्थशाः इत्येते शब्दाः निपात्यन्ते इति।

**उदाहरणम्** - अवपूर्वकयज्-धातोः, श्वेतपूर्वकवह्-धातोः, पुरस्पूर्वकदास्-धातोः "मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्" तथा "अवे यजः" इति सूत्रेण ण्विन्प्रत्यये प्राप्तौ "श्वेतवहादीनां डस् पदस्येति वक्तव्यम्" इति वार्तिकेन डस्प्रत्यये एतानि रूपाणि भवन्ति। अत्र सम्बोधनैकवचने दीर्घः निपात्यते।

## १७.१०) विजुपे छन्दसि॥ (३.२.७३)

**सूत्रार्थः** - उपे उपपदे यजेर्विच्।

**सूत्रावतरणम्** - उपे उपपदे यज्-धातोः विच्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण यज्-धातोः विच्-प्रत्ययः विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। विच् उपे छन्दसि इति सूत्रगतपदच्छेदः। विच् इति प्रथमान्तं पदम्। उपे इति सप्तम्येकवचनान्तं पदम्। छन्दसि इति अपि सप्तम्यन्तं पदम्। अवे यजः इति सूत्रात् यजः इत्यनुवर्तते। धातोः प्रत्ययः परः चेति अधिकृतमस्ति। ततश्च सूत्रार्थः भवति उपे उपपदे यज्-धातोः विच्-प्रत्ययः स्यात् इति।

**उदाहरणम्** - उपयट्।

**सूत्रार्थसमन्वयः**- उपपूर्वक-यज्-धातोः विच्-प्रत्यये उप यज् विच् इति स्थिते विचः सर्वापहारलोपे उप यज् इति जाते संयोगे उपपदे समासे निष्पन्नस्य उपयज् इति जाते उपपदसमासे प्रातिपदिकसंज्ञायां कृत्तद्धितसमासाश्च इत्यनेन तस्य प्रातिपदिकसंज्ञायां ततश्च ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सौ अनुनासिकत्वेन पाणिनीयैः प्रतिज्ञातस्य सुप्रत्ययस्य उकारस्य उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण तस्य



इत्संज्ञकस्य उकारस्य च लोपे उपयज् स् इति जाते हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् इत्यनेन सकारलोपे व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः इत्यनेन जकारस्य षकारे उपयष् इति जाते झलां जशोऽन्ते इत्यनेन षकारस्य जश्त्वे स्थानत आन्तर्यात् डकारे डकारात्परस्य वर्णाभावस्य विरामोऽवसानम् इति सूत्रेण अवसानसंज्ञायाम् अवसानपरकत्वात् च वावसाने इत्यनेन डकारस्य टकारे **उपयट्** इति रूपम्।

## १७.११) आतो मनिन्क्वनिब्वनिपश्च॥ (३.२.७४)

**सूत्रार्थः** - सुप्युपसर्गे चोपपदे आदन्तेभ्यो धातुभ्यः छन्दसि विषये मनिनादयस्त्रयः प्रत्ययाः स्युः। चाद्विच्।

**सूत्रावतरणम्** - सुबन्तोपपदे उपसर्गोपपदे च छन्दसि विषये आदन्तेभ्यो धातुभ्यः मनिन्-क्वनिप्-वनिप्-विच् प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण मनिन्, क्वनिप्, वनिप्, विच् इति एते प्रत्ययाः विधीयन्ते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। आतः मनिन्क्वनिब्वनिपः च इति सूत्रगतपदच्छेदः। आतः इति पञ्चम्यन्तं पदम्। मनिन्क्वनिब्वनिपः इति प्रथमाबहुवचनान्तं पदम्। च इति अव्ययपदम्। विजुपे छन्दसि इति सूत्रात् विच् छन्दसि चेति पदद्वयमनुवर्तते। सुपि उपसर्गे इत्यपि अनुवर्तते। धातोः प्रत्ययः परः चेति अधिकृतमस्ति। अत्र आतः इति विशेषणम्, धातोः इति विशेष्यम्। ततः तदन्तविधौ आदन्तात् धातोः इत्यर्थलाभः। ततश्च सूत्रार्थो भवति सुबन्तोपपदे उपसर्गोपपदे च छन्दसि विषये आदन्तेभ्यो धातुभ्यः मनिन्-क्वनिप्-वनिप्-विच्-प्रत्ययाः पराः स्युः इति।

**उदाहरणम्** - सुदामा इत्युदाहरणम्।

**सूत्रार्थसमन्वयः**- शोभनं ददाति इति विग्रहे शोभनम् इति सुबन्तोपपदे दा-धातोः आदन्तत्वात् प्रकृतसूत्रेण मनिन्-प्रत्यये अनुबन्धलोपे सु दा मन् इति स्थिते उपपदसमासे प्रातिपदिकसंज्ञायां सौ अनुबन्धलोपे सुदामन् स् इति जाते सर्वनामस्थाने चासम्बुद्धौ इत्यनेन उपधावृद्धौ सलोपे नकारलोपे च **सुदामा** इति रूपम्।

## १७.१२) बहुलं छन्दसि॥ (३.२.८८)

**सूत्रार्थः** - उपपदान्तरेऽपि हन्तेर्बहुलं क्विप् स्यात्।

**सूत्रावतरणम्** - उपपदान्तरेऽपि हन्-धातोः बहुलं क्विप्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण हन्-धातोः बहुलं क्विप्-प्रत्ययः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। बहुलम् इति प्रथमान्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्। ब्रह्मभ्रूणवृत्रेषु क्विप् इत्यस्मात् सूत्रात् क्विप् इत्यनुवर्तते। कर्मणि हनः इति सम्पूर्णं सूत्रमत्र अनुवर्तते। भूते इति सूत्रमपि अनुवर्तते। धातोः प्रत्ययः परः चेति अधिकृतमस्ति। ततश्च सूत्रार्थः भवति कर्मणि उपपदे हन्-धातोः भूते क्विप्-प्रत्ययः परः स्यात् इति।

**उदाहरणम्** - मातृहा इत्युदाहरणम्।



**सूत्रार्थसमन्वयः-** मातरं हतवान् इति विग्रहे कर्मणि उपपदे भूते हन्-धातोः प्रकृतसूत्रेण क्विप्-प्रत्यये मातृ हन् क्विप् इति स्थिते क्विपः सर्वापहारलोपे उपपदसमासे प्रातिपदिकसंज्ञायां सौ अनुबन्धलोपे मातृहन् स् इति स्थिते सौ च इत्यनेन उपधादीर्घे सकारलोपे नकारलोपे च **मातृहा** इति रूपम्।

## १७.१३) छन्दसि गत्यर्थेभ्यः॥ (३.३.१२६)

**सूत्रार्थः** - ईषदादिषूपपदेषु गत्यर्थेभ्यो धातुभ्यश्छन्दसि युच् स्यात्।

**सूत्रावतरणम्** - छन्दसि ईषदादिषु उपपदेषु गत्यर्थकेभ्यः धातुभ्यः युच्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण गत्यर्थकेभ्यः धातुभ्यः युच्-प्रत्ययः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। छन्दसि इति सप्तम्यन्तं पदम्। गत्यर्थेभ्यः इति पञ्चम्यन्तं पदम्। गतिः अर्थः येषां तेभ्यः गत्यर्थेभ्यः। आतो युच् इति सूत्रात् युच् इति अनुवर्तते। ईषद्-दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् इति सूत्रात् ईषद्-दुःसुषु कृच्छ्राकृच्छ्रार्थेषु इति पदद्वयमनुवर्तते। धातोः प्रत्ययः परः चेति अधिकृतमस्ति। ततश्च सूत्रार्थो भवति छन्दसि कृच्छ्राकृच्छ्रार्थेषु ईषद्-दुःसुषु उपपदेषु गत्यर्थकेभ्यः धातुभ्यः युच्-प्रत्ययः परः स्यात् इति।

**उदाहरणम्** - सूपसदनः।

**सूत्रार्थसमन्वयः-** सु-उपपदपूर्वस्य उप-उपपदपूर्वस्य च सद्-धातोः गत्यर्थकत्वात् प्रकृतसूत्रेण युच्-प्रत्यये अनुबन्धलोपे सु उप सद् यु इति स्थिते युवोरनाकौ इत्यनेन यु इत्यस्य स्थाने अनादेशे सु उप सद् अन इति जाते सवर्णदीर्घे संयोगे निष्पन्नस्य सूपसदन इत्यस्य उपपदे समासे प्रातिपदिकसंज्ञायां सौ अनुबन्धलोपे **सूपसदनः** इति रूपम्।

## १७.१४) अन्येभ्योऽपि दृश्यते॥ (३.३.१३०)

**सूत्रार्थः** - गत्यर्थेभ्यो येऽन्ये धातवस्तेभ्योऽपि छन्दसि युच् स्यात्।

**सूत्रावतरणम्** - गत्यर्थकाः ये अन्ये धातवः सन्ति तेभ्योऽपि छन्दसि युच्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण युच्-प्रत्ययः विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। अन्येभ्यः अपि दृश्यते इति सूत्रगतपदच्छेदः।अन्येभ्यः इति पञ्चम्यन्तं पदम्। अपि इति अव्ययपदम्। दृश्यते इति क्रियापदम्। आतो युच् इति सूत्रात् युच् इति अनुवर्तते। ईषद्-दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् इति सूत्रात् ईषद्-दुःसुषु कृच्छ्राकृच्छ्रार्थेषु इति पदद्वयमनुवर्तते। छन्दसि गत्यर्थेभ्यः इति सूत्रात् छन्दसि इति पदमनुवर्तते। धातोः प्रत्ययः परः चेति अधिकृतमस्ति। ततश्च सूत्रार्थो भवति छन्दसि कृच्छ्राकृच्छ्रार्थेषु ईषद्-दुःसुषु उपपदेषु गत्यर्थकेभ्यः अन्येभ्यो धातुभ्यः युच्-प्रत्ययः परः स्यात् इति।

**उदाहरणम्** - सुवेदनाम्।



**सूत्रार्थसमन्वयः-** सु-उपपदपूर्वकस्य विद्-धातोः गत्यर्थभिन्नार्थकत्वात् प्रकृतसूत्रेण युचि अनुबन्धलोपे सुविद् यु इति स्थिते युवोरनाकौ इत्यनेन यु-इत्यस्य अनादेशे सुविद् अन इति जाते विदः इकारस्य गुणे एकारे सु वेद् अन इति स्थिते संयोगे उपपदसमासे प्रातिपदिकसंज्ञायां स्त्रीत्वविवक्षायां टापि विभक्तिकार्ये **सुवेदनाम्** इति रूपम्।

## १७.१५) लिङर्थे लेट्॥ (३.४.७)

**सूत्रार्थः** - विध्यादौ हेतुहेतुमद्भावादौ च धातोर्लेट् स्याच्छन्दसि।

**सूत्रावतरणम्** - छन्दसि विध्यादिषु हेतुहेतुमद्भावादिषु च धातोः लेट्-विधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण छन्दसि विध्यादिषु हेतुहेतुमद्भावादिषु च धातोः लेट् लकारः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। लिङर्थे इति सप्तम्यन्तं पदम्। लेट् इति प्रथमान्तं पदम्। छन्दसि लुङ्-लङ्-लिटः इत्यस्मात् सूत्रात् छन्दसि इत्यनुवर्तते। अन्यतरस्यामित्यपि पूर्वसूत्रात् अनुवर्तते। धातोः प्रत्ययः परः चेति अधिकृतमस्ति। तदा च छन्दसि लिङर्थे धातोः लेट् प्रत्ययः परः इति वाक्ययोजना। लिङर्थो नाम विध्यादिः हेतुहेतुमद्भावादिः च। ततश्च सूत्रार्थः भवति छन्दसि विध्यादौ हेतुहेतुमद्भावादौ च धातोर्लेट् स्यात् इति।

**उदाहरणम्** - जोषिषत्। तारिषत्।

**सूत्रार्थसमन्वयः** - जुष्-धातोः लिङर्थे प्रकृतसूत्रेण लेटि प्रथमपुरुषैकवचने तिपि "सिब्बहुलं लेटि" इति सूत्रेण सिप्प्रत्यये अनुबन्धलोपे जुष् स् ति इति जाते "लेटोऽडाटौ" इति सुत्रेण अडागमे "आर्धधातुकस्येड्वलादेः" इति सूत्रेण इडागमे अनुबन्धलोपे जुष् इ स् अ ति इति जाते "इतश्च लोपः परस्मैपदेषु" इति सूत्रेण तिपः इकारस्य लोपे "पुगन्तलघूपधस्य च" इति सूत्रेण उपधागुणे "आदेशप्रत्यययोः" इत्यनेन सस्य षत्वे **जोषिषत्** इति रूपम्।

तॄ-धातोः लिङर्थे प्रकृतसूत्रेण लेटि तिपि सिप्प्रत्यये अडागमे अनुबन्धलोपे तॄ स् अ ति इति जाते "सार्वधातुकार्धधातुकयोः" इति सूत्रेण ऋकारस्य गुणे अकारे रपरत्वे इडागमे अनुबन्धलोपे तर् इ स् अति इति जाते "व्यत्ययो बहुलम्" इति सूत्रेण तकारोत्तरस्याकारस्य आकारे "इतश्च लोपः परस्मैपदेषु" इत्यनेन इकारस्य लोपे सस्य षत्वे **तारिषत्** इति रूपम्।

## १७.१६) इतश्च लोपः परस्मैपदेषु॥ (३.४.९७)

**सूत्रार्थः** - लेटस्तिङामितो लोपो वा स्यात्परस्मैपदेषु।

**सूत्रावतरणम्** - परस्मैपदेषु विकल्पेन लेटः तिङामितो लोपविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। सूत्रेणानेन लेटः इकारस्य परस्मैपदेषु वा लोपो विधीयते। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। इतः च लोपः परस्मैपदेषु इति सूत्रगतपदच्छेदः। इतः इति षष्ठ्यन्तं पदम्। च इति अव्ययपदम्। लोपः इति प्रथमान्तं पदम्। परस्मैपदेषु इति सप्तम्यन्तं पदम्। लेटोऽडाटौ इति सूत्रात् लेटः इति अनुवर्तते। वा इत्यपि वैतोऽन्यत्र इत्यस्मात् पूर्वसूत्रात् अनुवर्तते। तदा च लेटः इतः वा

लोपः परस्मैपदेषु इति वाक्ययोजना। ततश्च सूत्रार्थः भवति लेटः तिङाम् ह्रस्व-इकारस्य विकल्पेन लोपः स्यात् परस्मैपदेषु इति।

**उदाहरणे सूत्रार्थसमन्वयः** - जोषिषत्-जुष्-धातोः लिङर्थे प्रकृतसूत्रेण लेटि प्रथमपुरुषैकवचने तिपि "सिब्बहुलं लेटि" इति सूत्रेण सिप्प्रत्यये अनुबन्धलोपे जुष् स् ति इति जाते "लेटोऽडाटौ" इति सुत्रेण अडागमे "आर्धधातुकस्येड्वलादेः" इति सूत्रेण इडागमे च अनुबन्धलोपे जुष् इ स् अ ति इति जाते "इतश्च लोपः परस्मैपदेषु" इति सूत्रेण तिपः इकारस्य लोपे "पुगन्तलघूपधस्य च" इति सूत्रेण उपधागुणे "आदेशप्रत्यययोः" इति सस्य षत्वे **जोषिषत्** इति रूपम्।

## १७.१७) लेटोऽडाटौ॥ (३.४.६४)

**सूत्रार्थः** - लेटः अट् आट् एतावागमौ स्तः तौ च पितौ।

**सूत्रावतरणम्** - लेट्-लकारस्य अट् आट् इति आगमविधानार्थं तेषां पित्त्वविधानाय च सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण लेट्-लकारस्य अट् आट् इति आगमौ विधीयेते। अस्मिन् सूत्रे द्वे पदे स्तः। लेटः अडाटौ इति सूत्रगतपदच्छेदः। लेटः इति षष्ठ्यन्तं पदम्। अडाटौ इति प्रथमान्तं पदम्। अट् च आट् च अडाटौ। आडुत्तमस्य पिच्च इति सूत्रात् पित् इत्यनुवर्तते, तच्च द्विवचनान्ततया विपरिणमते। ततश्च सूत्रार्थो भवति लेटः अडाटौ आगमौ स्तः तौ च पितौ इति।

**उदाहरणम्** - तारिषत्।

**सूत्रार्थसमन्वयः**- तॄ-धातोः लेटि अनुबन्धलोपे तॄ ल् इति स्थिते लस्य स्थाने तिपि अनुबन्धलोपे तॄ ति इति स्थिते पूर्वोक्तसूत्रेण अडागमे अनुबन्धलोपे तॄ अ ति इति जाते सिब्बहुलं लेटि इत्यनेन सिप्-प्रत्यये अनुबन्धलोपे तॄ स् अ ति इति जाते सिब्बहुलं णिद्वक्तव्यः इत्यनेन वार्तिकेन सस्य णिद्वद्भावम् अङ्गीकृत्य तस्मिन् परतः ऋकारस्य अचो ञ्णिति इत्यनेन वृद्धौ तार् स् अ ति इति जाते इडागमे अनुबन्धलोपे तार् इ स् अ ति इति जाते इतश्च लोपः परस्मैपदेषु इत्यनेन विकल्पेन इकारस्य लोपविधानाद् आदेशप्रत्यययोः इत्यनेन सकारस्य षकारे **तारिषत्** इति रूपम् सिध्यति।

## १७.१८) स उत्तमस्य॥ (३.४.६८)

**सूत्रार्थः** - लेडुत्तमसकारस्य वा लोपः स्यात्।

**सूत्रावतरणम्** - लेडुत्तमस्य सकारस्य विकल्पेन लोपविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण लेडुत्तमस्य सकारस्य विकल्पेन लोपः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। स इति प्रथमान्तं पदम्। उत्तमस्य इति षष्ठ्यन्तं पदम्। इतश्च लोपः परस्मैपदेषु इत्यस्मात् सूत्रात् लोपः इत्यनुवर्तते। लेटोऽडाटौ इति सूत्रात् लेटः इति अनुवर्तते। वा इत्यपि वैतोऽन्यत्र इत्यस्मात् पूर्वसूत्रात् अनुवर्तते। ततश्च सूत्रार्थो भवति लेटः उत्तमस्य सकारस्य विकल्पेन लोपः स्यात् इति।

**उदाहरणम्** - करवाव।



**सूत्रार्थसमन्वयः-** कृ-धातोः लेटि अनुबन्धलोपे कृ ल् इति स्थिते लस्य स्थाने वसि कृ वस् इति जाते तनादिकृञ्भ्य उः इत्यनेन उप्रत्यये कृ उ वस् इति जाते ऋकारस्य गुणे कर् उ वस् इति जाते लेटोऽडाटौ इत्यनेन (पिति) आडागमे अनुबन्धलोपे कर् उ आ वस् इति जाते उकारस्य गुणे अवादेशे च कर् अव् आ वस् इति जाते पूर्वोक्तसूत्रेण विकल्पेन सकारलोपे सर्ववर्णसम्मेलने **करवाव** इति रूपम्। सकारलोपाभावपक्षे **करवावः** इति रूपम्।

## १७.१९) आत ऐ॥ (३.४.९५)

**सूत्रार्थः** - लेटः आकारस्य ऐ स्यात्।

**सूत्रावतरणम्** - लेट्-लकारस्य आकारस्य ऐकारविधनाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण लेट्-लकारस्य आकारस्य ऐकारः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। आत इति षष्ठ्येकवचनान्तं पदम्। ऐ इति लुप्तप्रथमान्तम्। लेटोऽडाटौ इति सूत्रात् लेटः इति अनुवर्तते। ततश्च सूत्रार्थो भवति लेटः आकारस्य ऐकारः स्यात् इति।

**उदाहरणम्** - मादयैते इत्युदाहरणम्।

**सूत्रार्थसमन्वयः-** मादि-धातोः लेटि अनुबन्धलोपे मादि ल् इति स्थिते लस्य स्थाने आताम्-प्रत्यये मादि आताम् इति जाते लेटोऽडाटौ इत्यनेन आडागमे अनुबन्धलोपे मादि आ आताम् इति जाते इकारस्य गुणे एकारे अयादेशे च माद् अय् आ आताम् इति जाते पूर्वोक्तसूत्रेण आतामः आकारस्य ऐकारे मादय् आ ऐताम् इति जाते टित आत्मनेपदानां टेरे इत्यनेन टेः एत्वे मादय् आ ऐ त् ए इति आटश्च इति वृद्धौ एकादेशे ऐकारे मादय् ऐ त् ए इति जाते सर्ववर्णसम्मेलने **मादयैते** इति रूपम्।

## १७.२०) सिब्बहुलं लेटि॥ (३.१.३४)

**सूत्रार्थः** - लेटि धातोः सिप्-प्रत्ययः बहुलं स्यात्।

**सूत्रावतरणम्** - लेटि धातोः बाहुल्येन सिप्-प्रत्ययविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - सूत्रमिदं विधिसूत्रम्। अनेन सूत्रेण लेट्-लकारे धातोः बाहुल्येन सिप्-प्रत्ययः विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। सिप् बहुलं लेटि इति सूत्रगतपदच्छेदः। सिप् इति प्रथमान्तं पदम्। बहुलम् इति अपि प्रथमान्तं पदम्। लेटि इति सप्तम्यन्तं पदम्। धातोः प्रत्ययः परः चेति अधिकृतमस्ति। ततश्च सूत्रार्थो भवति लेटि धातोः सिप्-प्रत्ययः बहुलं स्यात् इति।

**उदाहरणम्** - जोषिषत्।

**सूत्रार्थसमन्वयः** -जुष्-धातोः लिङर्थे प्रकृतसूत्रेण लेटि प्रथमपुरुषैकवचने तिपि "सिब्बहुलं लेटि" इति प्रकृतसूत्रेण सिप्प्रत्यये अनुबन्धलोपे जुष् स् ति इति जाते "लेटोऽडाटौ" इति सुत्रेण अडागमे "आर्धधातुकस्येड्वलादेः" इति सूत्रेण इडागमे च अनुबन्धलोपे जुष् इ स् अ ति इति जाते "इतश्च लोपः परस्मैपदेषु" इति सूत्रेण तिपः इकारस्य लोपे "पुगन्तलघूपधस्य च" इति सूत्रेण उपधागुणे ओकारे "आदेशप्रत्यययोः" इत्यनेन सस्य षत्वे **जोषिषत्** इति रूपम् सिद्ध्यति।



##  पाठगतप्रश्नाः-२

९. अवयाः श्वेतवाः पुरोडाश्च इत्यस्य कोऽर्थः।

१०. विजुपे च्छन्दसि इति सूत्रस्य पदच्छेदः दर्शनीयः।

११. विजुपे च्छन्दसि इति सूत्रेण कस्माद्धातोः कः प्रत्ययः विधीयते।

१२. उपयज्-इति शब्दस्वरूपस्य प्रातिपदिकसंज्ञाविधायकं सूत्रं किम्।

१३. आतो मनिन्क्वनिब्वनिपश्च इति सूत्रे चकारग्रहणेन किं सिद्ध्यति।

१४. हन्तेर्बहुलं क्विप् केन विधीयते।

१५. गत्यर्थेभ्यो धातुभ्यश्छन्दसि युच् केन भवति।

१६. गत्यर्थेभ्यो येऽन्ये धातवस्तेभ्योऽपि छन्दसि युच् केन भवति।

१७. विध्यादौ हेतुहेतुमद्भावादौ च धातोर्लेट् केन भवति।

१८. इतश्च लोपः परस्मैपदेषु इत्यस्य कोऽर्थः।

१९. लेटः अट् आट् एतौ आगमौ केन सूत्रेण भवतः।

२०. स उत्तमस्य इति सूत्रेण किं विधीयते।

२१. सुदामा इत्यस्य कोऽर्थः।

२२. आत ऐ इति सूत्रेण किं विधीयते।

२३. छन्दसि विध्यादौ हेतुहेतुमद्भावादौ च धातोर्लेट् केन विधीयते।

२४. अन्येभ्योऽपि दृश्यते इत्यस्य कोऽर्थः।

२५. लिङर्थः कः।

२६. मातरं हतवान् इत्यर्थे किं रूपम्।

##  पाठसारः

पाठेऽस्मिन् इन्, ण्वि, ञ्युट्, विट्, विच्, क्विप् इत्यादीनाम् केषाञ्चित् प्रत्ययानाम् ससूत्रम् प्रयोगः प्रदर्शितः। तत्र च केषाञ्चित् वैदिकशब्दानाम् लौकिकरूपाणि अपि प्रदर्शितानि। तथापि पाठविस्तरभयात् न सर्वाणि रूपाणि ससूत्रम् प्रदर्शितानि। तानि च स्वयं बोद्धव्यानि। केचित् निपातनसिद्धशब्दाः अपि आलोचिताः। अन्ते च लेट्लकारसम्बन्धिनी चर्चा अपि विहिता।





## पाठान्तप्रश्नाः

१. छन्दसि गत्यर्थेभ्यः इति सूत्रं व्याख्यात।
२. अन्येभ्योऽपि दृश्यते इति सूत्रं व्याख्यात।
३. बहुलं छन्दसि इति सूत्रं व्याख्यात।
४. हव्येऽनन्तःपादम् इति सूत्रं व्याख्यात।
५. छन्दसि सहः इति सूत्रस्य व्याख्यानं कुरुत।
६. उपयट् सुदामा इति रूपद्वयं च यथासूत्रं साधयत।



## पाठगतप्रश्नानामुत्तराणि

**उत्तरकूटः-१**

१. सिद्धप्रक्रियस्य निर्देशो हि निपातः।
२. याचनम्।
३. पृतनाषाट्।
४. झलां जशोऽन्ते।
५. छन्दसि वन्-धातोः सन्-धातोः रक्ष्-धातोः मथ्-धातोः च कर्मणि नाम कर्मण्युपपदे इन्-प्रत्ययः स्यादिति।
६. हव्येऽनन्तःपादम्।
७. मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्।
८. छन्दसि सप्युपपदे वहः ण्विः स्यात्।

**उत्तरकूटः-२**

९. सम्बुद्धौ कृतदीर्घाः अवयाः श्वेतवाः पुरोडाः उक्थशाः इत्येते शब्दाः निपात्यन्ते इति।
१०. विच् उपे छन्दसि इति सूत्रगतपदच्छेदः।
११. यज्धातोः विच्प्रत्ययः विजुपे च्छन्दसि इति सूत्रेण विधीयते।
१२. कृत्तद्धितसमासाश्च इति अत्र प्रातिपदिकसंज्ञाविधायकं सूत्रम्।
१३. विच्प्रत्ययः सिद्ध्यति।
१४. बहुलं च्छन्दसि इत्यनेन।
१५. च्छन्दसि गत्यर्थेभ्यः इत्यनेन।
१६. अन्येभ्योऽपि दृश्यते इति सूत्रेण।
१७. लिङर्थे लेट् इति सूत्रेण।
१८. लेटस्तिङामितो लोपो वा स्यात्परस्मैपदेषु।
१९. लेटोऽडाटौ इति सूत्रेण।



२०. लेडुत्तमसकारस्य वैकल्पिकलोपः विधीयते।

२१. शोभनं ददाति इत्यर्थः।

२२. लेटः आकारस्य ऐकारः विधीयते।

२३. लिङर्थे लेट्।

२४. गत्यर्थेभ्यो येऽन्ये धातवस्तेभ्यो छन्दसि युच् स्यात् इति।

२५. हेतुहेतुमद्भावादिः विध्यादिः च।

२६. मातृहा।

## इति सप्तदशः पाठः



१८

# अष्टाध्याय्याः तृतीयचतुर्थौ अध्यायौ

## प्रस्तावना

अस्मिन् तृतीये पाठे अष्टाध्याय्याः तृतीयचतुर्थाध्याययोः सूत्राणि व्याख्यास्यन्ते। अत्र छन्दसि शायजपि, छन्दस्युभयथा, दृशे विख्ये च, शकि णमुल्कमुलौ चेति सूत्राणां व्याख्यानं करिष्यते। तेषु विविधशब्दानां निपातविषये विशेषरूपेण आलोचना विधास्यते, ये च शब्दाः केवलं वेदे एव भवन्ति। ततः अत्र विविधप्रत्ययविषये अपि आलोचना करिष्यते, येषु केचन केवलं वेदे एव भवन्ति, केचन लोके अपि भवन्ति। ते च प्रत्ययाः विविधेषु अर्थेषु विभिन्नशब्देभ्यः भवन्ति। तेषां च विशिष्टरूपाणाम् प्रक्रियापि प्रदर्शयिष्यते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- वेदे लेट्- लकारः कस्मिन्नर्थे भवतीति ज्ञास्यति।
- विकरणप्रत्ययानां छन्दसि बहुलार्थे व्यत्ययः भवतीति ज्ञास्यति।
- छन्दसि धात्वधिकारे उक्ताः प्रत्ययाः सार्वधातुकार्धधातुकोभयसंज्ञकाः भवन्ति इति ज्ञास्यति।
- छन्दसि तुमर्थे के विशिष्टाः प्रत्ययाः भवन्ति तज्ज्ञास्यति।
- छन्दसि के विशिष्टाः शब्दाः निपात्यन्ते तदवगमिष्यति।

## १८.१) उपसंवादाशङ्कयोश्च॥ (३.४.८)

**सूत्रार्थः** - पणबन्धे आशङ्कायां च लेट् स्यात्।

**सूत्रावतरणम्** - उपसंवादे आशङ्कायां च लेट्-लकारविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन लेट्- लकारः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। उपसंवादाशङ्कयोः च इति सूत्रगतपदच्छेदः। उपसंवादाशङ्कयोः इति सप्तम्यन्तं पदम्। च इति अव्ययपदम्। छन्दसि लुङ्-लङ्-लिटः इत्यस्मात् सूत्रात् छन्दसि इत्यनुवर्तते। लिङर्थे लेट् इति सूत्रात् लेट् इत्यनुवर्तते। ततः पदयोजना - छन्दसि उपसंवादाशङ्कयोः लेट् इति। उपसंवादश्च आशङ्का च उपसंवादाशङ्के तयोः उपसंवादाशङ्कयोः इति इतरेतरयोगः। उपसंवादो नाम पणबन्धः। यदि भवान् मम इदं



कुर्यात् तर्हि इदमहं दास्यामि इति समयकरणं पणबन्धः। आशङ्कार्थः सम्भावना। प्रायः इदं भविष्यतीति चिन्तनं सम्भावनम्। सूत्रार्थो हि उपसंवादे आशङ्कायां च लेट्-प्रत्ययः स्यात् इति।

**उदाहरणम्** - उपसंवादस्य उदाहरणम् - अहमेव पशूनामीशै इति। आशङ्कायाः उदाहरणम् अस्ति - नेज्जिह्मायन्त्यो नरकं पताम इति।

## १८.२) छन्दसि शायजपि॥ (३.१.८४)

**सूत्रार्थः** - छन्दसि हल उत्तरस्य श्नः शायच् अपि भवति हौ परे।

**सूत्रावतरणम्** - छन्दसि हल उत्तरस्य हौ परे श्नः शायज्विधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण श्नाप्रत्ययस्य स्थाने शायच्-शानचौ आदेशौ विधीयेते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। छन्दसि शायच् अपि इति सूत्रगतपदच्छेदः। छन्दसि इति सप्तम्यन्तं पदम्। शायच् इति प्रथमान्तं पदम्। अपि इति अव्ययम्। हलः श्नः शानज्झौ इति सूत्रात् हलः श्नः हौ चेति पदत्रयमनुवर्तते। छन्दसि हलः श्नः शायच् अपि हौ इति पदयोजना। सूत्रे अपिशब्दग्रहणम् शानजादेशस्यापि विधानार्थम्। वेदविषये हलः उत्तरस्य श्नः स्थाने शायच् शानच् चेति आदेशौ स्याताम् हौ परतः इति। शायचः शकारः लशक्वतद्धिते इत्यनेन इत्संज्ञकः, चकारस्तु हलन्त्यम् इत्यनेन। तेन आय इत्येव शिष्यते।

**उदाहरणम्** - गृभाय।

**सूत्रार्थसमन्वयः**- ग्रह् (ग्रह उपादाने) इति धातोः लोटि अनुबन्धलोपे ग्रह् ल् इति स्थिते लस्य स्थाने सिपि अनुबन्धलोपे ग्रह् सि इति स्थिते क्र्यादिभ्यः श्ना इति श्नाप्रत्यये अनुबन्धलोपे ग्रह् ना सि इति जाते सेर्ह्यपिच्च इत्यनेन सिस्थाने हि इति सर्वादेशे ग्रह् ना हि इति जाते प्रकृतसूत्रेण श्नास्थाने शायच्-आदेशे अनुबन्धलोपे ग्रह् आय हि इति जायते। ततः अतो हेः इति सूत्रेण हेः लोपे ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च इत्यनेन गकारोत्तरवर्तिनः रेफस्य सम्प्रसारणे ऋकारे गृ अ ह् आय इति जाते सम्प्रसारणाच्च इत्यनेन पूर्वरूपैकादेशे गृह् आय इति जाते हृग्रहोर्भश्छन्दसि इति वार्तिकेन हकारस्य स्थाने भकारादेशे सर्ववर्णसम्मेलने विभक्तिकार्ये च **गृभाय** इति रूपम्।

## १८.३) व्यत्ययो बहुलम्॥ (३.१.८५)

**सूत्रार्थः** - विकरणानां बहुलं व्यत्ययः स्यात् छन्दसि।

**सूत्रावतरणम्** - छन्दसि विकरणानां बहुलं व्यत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन शबादीनां विकरणप्रत्ययानां व्यत्ययो विधीयते।अस्मिन् सूत्रे द्वे पदे स्तः। व्यत्ययः इति प्रथमान्तं पदम्। बहुलम् इति अव्ययपदम्। छन्दसि शायजपि इत्यस्मात् सूत्रात् छन्दसि इति पदमनुवर्तते। विकरणानाम् इति आक्षेपाल्लभ्यते। विकरणानां बहुलं व्यत्ययः छन्दसि इति पदयोजना। व्यतिगमनम् व्यतिहारः व्यतिक्रमो वा व्यत्ययः। सूत्रार्थो हि छन्दसि विकरणानां बहुलं व्यत्ययः स्यात् इति।



**उदाहरणम्** - भेदति।

**सूत्रार्थसमन्वयः**- भिद् (भिदिर् आवरणे) इति धातोः लटि अनुबन्धलोपे भिद् ल् इति स्थिते लस्य स्थाने तिपि अनुबन्धलोपे भिद् ति इति स्थिते भिद्-धातोः रुधादिगणे पठितत्वात् रुधादिभ्यो श्नम् इत्यनेन प्राप्तं श्नम्-विकरणं बाधित्वा प्रकृतसूत्रेण व्यत्ययेन शप्-प्रत्यये अनुबन्धलोपे भिद् अ ति इति स्थिते शपः सार्वधातुकत्वात् पुगन्तलघूपधस्य च इत्यनेन भिद् इत्यस्य लघूपधस्य इकारस्य गुणे एकारे सर्ववर्णसम्मेलने **भेदति** इति रूपम् सिध्यति। श्नमि कृते तु **भिनत्ति** इति रूपम् भवति।

## १८.४) छन्दस्युभयथा॥ (३.४.११७)

**सूत्रार्थः** - धात्वधिकारे उक्तः प्रत्ययः सार्वधातुकार्धधातुकोभयसंज्ञः स्यात्।

**सूत्रावतरणम्** - धात्वधिकारे उक्तानां प्रत्ययानां सार्वधातुकार्धधातुकोभयसंज्ञाविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - संज्ञासूत्रमिदम्। अनेन सार्वधातुकसंज्ञा आर्धधातुकसंज्ञा च विधीयेते। अस्मिन् सूत्रे द्वे पदे स्तः। छन्दसि उभयथा इति सूत्रगतपदच्छेदः। छन्दसि इति सप्तम्यन्तं पदम्। उभयथा इति अव्ययम्। सार्वधातुकम् आर्धधातुकं च इति उभयथाशब्दस्य तात्पर्यम्। धातोः प्रत्ययः परः इति त्रयम् अधिकृतम्। छन्दसि धातोः परः प्रत्ययः उभयथा इति पदयोजना। सूत्रार्थो हि छन्दसि धात्वधिकारोक्ताः प्रत्ययाः सार्वधातुकार्धधातुकोभयसंज्ञकाः स्युः इति।

**उदाहरणम्** - वर्धन्तु।

**सूत्रार्थसमन्वयः**- णिजन्तात् वृध्-धातोः लोटि अनुबन्धलोपे वृध् इ ल् इति स्थिते लस्य स्थाने प्रथमपुरुषबहुवचनविवक्षायां झि-प्रत्यये वृध् इ झि इति जाते कर्तरि शप् इति शपि अनुबन्धलोपे वृध् इ अ झि इति जायते। ततः झकारस्य स्थाने अन्तादेशे वृध् इ अ अन्त् इ इति जाते एरुः इत्यनेन इकारस्य उकारे वृध् इ अ अन्त् उ इति जायते। अत्र तिङ्शित्सार्वधातुकम् इत्यनेन शपः सार्वधातुकसंज्ञा अस्ति। किन्तु प्रकृतसूत्रेण शपः आर्धधातुकसंज्ञापि भवति। ततः आर्धधातुकशप्परत्वात् णेरनिटि इत्यनेन णेः इकारस्य लोपो भवति। ततः (अ अन्त्) इति दशायाम् अतो गुणे इत्यनेन पररूपैकादेशे अकारे वृध् अन्त् उ इति जाते सर्ववर्णसम्मेलने **वर्धन्तु** इति रूपम्। लोके तु **वर्धयन्तु** इति रूपम्। यतो हि अत्र शप् सार्वधातुकमेव भवति। तेन शपः आर्धधातुकत्वाभावात् णेरनिटि इत्यस्य अप्रवृत्तिः। तेन च न णिलोपः।

## १८.५) तुमर्थे से-सेनसे-असेन्क्से-कसेनध्यै-अध्यैन्कध्यै-कध्यैन्शध्यै-शध्यैन्तवैतवेङ्तवेनः॥ (३.४.९)

**सूत्रार्थः** - छन्दसि तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यै-कध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः प्रत्ययाः स्युः।

**सूत्रावतरणम्** - छन्दसि तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यै-कध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेन्-प्रत्ययानां विधानार्थं सूत्रमिदं प्रणीतम्।



**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन से सेन् असे इत्यादयः प्रत्ययाः विधीयन्ते। अस्मिन् सूत्रे द्वे पदे स्तः। तुमर्थे इति सप्तम्यन्तं पदम्। से-सेनसे-असेन्क्से-कसेनध्यै-अध्यैन्कध्यै-कध्यैन्शध्यै-शध्यैन्त-वैतवेङ्तवेनः इति प्रथमान्तं पदम्। छन्दसि लुङ्-लङ्-लिटः इत्यस्मात् सूत्रात् छन्दसि इत्यनुवर्तते। धातोः प्रत्ययः परश्च इति सूत्रत्रयम् अधिकृतम् अस्ति। ततश्च सूत्रार्थो भवति छन्दसि तुमर्थे धातोः सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः प्रत्ययाः स्युः इति।

**उदाहरणम्** - वक्षे इत्युदाहरणम्।

**सूत्रार्थसमन्वयः** - वच्-धातोः तुमर्थे पूर्वोक्तसूत्रेण से-प्रत्यये वच् से इति स्थिते चोः कुः इत्यनेन चकारस्य ककारे वक् से इति स्थिते आदेशप्रत्यययोः इत्यनेन सकारस्य षकारे वक्षे इति एजन्तकृदन्तसमुदायो भवति। ततः कृदन्तत्वात् प्रातिपदिकसंज्ञायाम् औत्सर्गिके एकवचने सुविभक्तौ वक्षे स् इति जायते। ततः वक्षे इत्यस्य एजन्तकृदन्तसमुदायत्वात् कृन्मेजन्तः इत्यनेन अव्ययसंज्ञायाम् अव्ययादाप्सुपः इत्यनेन सोः लुकि **वक्षे** इति रूपम्। लोके तु **वक्तुम्** इति रूपम् भवति। एवमेव **जीवसे (जीवितुम्)** इत्यादीन्यपि उदाहरणानि।

## १८.६) दृशे विख्ये च॥ (३.४.११)

**सूत्रार्थः** - छन्दसि दृशे विख्ये चेति तुमर्थे निपात्येते।

**सूत्रावतरणम्** - छन्दसि द्रष्टुमित्यर्थे दृशे विख्यातुमित्यर्थे विख्ये इत्यस्य निपातनार्थं सूत्रमिदं प्रणीतम्। तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः इत्यस्मात् सूत्रात् तुमर्थे इत्यनुवर्तते।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन दृशे विख्ये चेति द्वयोः रूपयोः निपातनं विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। दृशे विख्ये चेति पदद्वयं प्रथमान्तम्। चेति अव्ययपदम्। छन्दसि लुङ्-लङ्-लिटः इत्यस्मात् सूत्रात् छन्दसि इत्यनुवर्तते। ततश्च सूत्रार्थो भवति छन्दसि तुमर्थे दृशे विख्ये इत्येतौ निपात्येते इति।

**उदाहरणम्**- दृशे। विख्ये।

**सूत्रार्थसमन्वयः**- वेदे दृश्- धातोः तुमर्थके के-प्रत्यये अनुबन्धलोपे च दृश् ए इति जाते पूर्ववत् विभक्तिकार्ये च **दृशे** इति रूपं सिध्यति। वि-पूर्वकात् ख्या-धातोः के- प्रत्यये अनुबन्धलोपे च वि ख्या ए इति जायते। ततः ओतो लोप इटि च इत्यनेन ख्या इत्यस्य आकारलोपे वि ख्य् ए इति जाते सर्ववर्णसम्मेलने पूर्ववत् विभक्तिकार्ये च **विख्ये** इति रूपं सिध्यति।

## १८.७) शकि णमुल्कमुलौ॥ (३.४.१२)

**सूत्रार्थः** - शक्नोतावुपपदे तुमर्थे एतौ स्तः।

**सूत्रावतरणम्** - शक्नोतावुपपदे तुमर्थे णमुल्-कमुल्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन णमुल्, कमुल् चेति प्रत्ययौ विधीयेते। अस्मिन् सूत्रे द्वे पदे स्तः। शकि इति सप्तम्यन्तं पदम्। णमुल्कमुलौ इति प्रथमान्तं पदम्। धातोः प्रत्ययः परश्च इति सूत्रत्रयम्



अधिकृतम् अस्ति। ततश्च सूत्रार्थो भवति शक्नोतावुपपदे तुमर्थे धातोः परं णमुल्-कमुल्-प्रत्ययौ स्तः इति। णमुलः णकारः चुटू इत्यनेन इत्संज्ञकः, लकारश्च हलन्त्यम् इत्यनेन। उकारश्च उच्चारणार्थः। तेन अम् इत्येव शिष्यते। णमुलः णित्त्वात् वृद्धिः भवति।कमुलः ककारः लशक्वतद्धिते इत्यनेन इत्संज्ञकः। लकारश्च हलन्त्यम् इत्यनेन। उकारश्च उच्चारणार्थः। तेन अम् इत्येव शिष्यते। कमुलः कित्त्वात् गुणनिषेधः।

**उदाहरणम् -** विभाजं नाशकत्। अपलुपं नाशकत्।

**सूत्रार्थसमन्वयः-** पूर्वोक्ते प्रथमे उदाहरणे अशकत् इति शक्धातोः लुङि प्रथमैकवचनान्तम् रूपम्। तच्च उपपदम् अस्ति। अतः विपूर्वकात् भज्-धातोः प्रकृतसूत्रेण णमुल्-प्रत्यये अनुबन्धलोपे वि भज् अम् इति स्थिते अत उपधायाः इति उपधावृद्धौ विभाजम् इति मान्तकृदन्तसमुदायो जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञा। ततः कृन्मेजन्तः इत्यनेन अव्ययसंज्ञायाम् औत्सर्गिके एकवचने सुप्रत्यये अव्ययादाप्सुपः इत्यनेन सोः लुकि **विभाजम्** इति रूपम्। लोके तु **विभक्तुम्** इति रूपम्।

द्वितीये उदाहरणे अशकत् इति उपपदम् अस्ति। तस्मात् प्रकृतसूत्रेण अप- पूर्वकात् लुप्-धातोः कमुल्- प्रत्ययो भवति। ततः धातोः उकारस्य गुणे प्राप्ते कमुल्- प्रत्ययस्य कित्त्वात् गुणनिषेधे पूर्ववत् विभक्तिकार्ये च **अपलुपम्** इति रूपं सिध्यति। लोके तु **अपलोप्तुम्** इति रूपम्।



## पाठगतप्रश्नाः-१

१. विभाजम् इत्यत्र कः प्रत्ययः।
२. शक्नोतावुपपदे णमुल्-कमुल्-प्रत्ययौ कस्मिन् अर्थे भवतः।
३. छन्दसि विख्ये इति पदं साधु न वा।
४. छन्दस्युभयथा इत्यस्य कोऽर्थः।
५. गृभाय इत्यत्र केन सूत्रेण कः प्रत्ययो विधीयते।

## १८.८) ईश्वरे तोसुन्कसुनौ॥ (३.४.१३)

**सूत्रार्थः -** छन्दसि ईश्वरे उपपदे तुमर्थे धातोः तोसुन्-कसुनौ स्तः।

**सूत्रावतरणम् -** ईश्वरे उपपदे छन्दसि तुमर्थे धातोः तोसुन्प्रत्ययस्य कसुन्प्रत्ययस्य च विधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या -** विधिसूत्रमिदम्। अनेन तोसुन् कसुन् चेति प्रत्ययौ विधीयेते। अस्मिन् सूत्रे द्वे पदे स्तः। ईश्वरे इति सप्तम्यन्तं पदम्। तोसुन्कसुनौ इति प्रथमान्तं पदम्। छन्दसि लुङ्-लङ्-लिटः इत्यस्मात् सूत्रात् छन्दसि इत्यनुवर्तते। तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः



इत्यस्मात् सूत्रात् तुमर्थे इत्यनुवर्तते। धातोः प्रत्ययः परश्च इति सूत्रत्रयम् अधिकृतम् अस्ति। ततश्च सूत्रार्थो भवति छन्दसि ईश्वरशब्दे उपपदे तुमर्थे धातोः तोसुन्-कसुनौ स्तः इति।

**उदाहरणम्** - ईश्वरो विचरितोः। विचरितोः इत्यस्य विचरितुमित्यर्थः।

**सूत्रार्थसमन्वयः** - ईश्वरोपपदे विपूर्वकचर्-धातोः प्रकृतसूत्रेण तोसुन्-प्रत्यये अनुबन्धलोपे वि चर् तोस् इति स्थिते आर्धधातुकस्येड्वलादेः इत्यनेन इडागमे विचरितोस् इति समुदायो भवति। अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञा। ततः क्त्वातोसुन्कसुनः इत्यनेन विचरितोस् इत्यस्य अव्ययसंज्ञायाम् औत्सर्गिके एकवचने सुप्रत्यये विचरितोस् स् इति जाते अव्ययादाप्सुपः इति विभक्तिसंज्ञकस्य सोः सकारस्य लुकि विचरितोस् इत्यस्य सकारस्य रुत्वे विसर्गे **विचरितोः** इति रूपम् सिध्यति। लोके तु **विचरितुम्** इति रूपम् भवति।

## १८.९) सृपितृदोः कसुन्॥ (३.१.१७)

**सूत्रार्थः** - छन्दसि भावलक्षणे तुमर्थे सृपितृदोः कसुन् स्यात्।

**सूत्रावतरणम्** - छन्दसि भावलक्षणे वर्तमानात् सृप्-धातोः तृद्-धातोः च तुमर्थे कसुन्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सृप्-धातोः तृद्-धातोः च तुमर्थे कसुन्-प्रत्ययो विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। सृपितृदोः इति षष्ठ्यन्तं पदम्। कसुन् इति प्रथमान्तं पदम्। छन्दसि लुङ्-लङ्-लिटः इत्यस्मात् सूत्रात् छन्दसि इत्यनुवर्तते। तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः इत्यस्मात् सूत्रात् तुमर्थे इत्यनुवर्तते। भावलक्षणे स्थेण्-कृञ्-वदि-चरि-हु-तमि-जनिभ्यस्तोसुन् इति सूत्रात् भावलक्षणे इत्यनुवर्तते। धातोः प्रत्ययः परश्च इति सूत्रत्रयम् अधिकृतम् अस्ति। ततश्च सूत्रार्थः भवति छन्दसि भावलक्षणे सृप्-धातोः तृद्-धातोः च तुमर्थे कसुन्-प्रत्ययः स्यादिति। कसुनः ककारः लशक्वतद्धिते इत्यनेन इत्संज्ञकः, नकारश्च हलन्त्यम् इत्यनेन। उकारश्च उच्चारणार्थः। तेन अस् इत्येव शिष्यते। कित्त्वात् गुणाभावः।

**उदाहरणम्** - विसृपः। आतृदः।

**सूत्रार्थसमन्वयः**- विपूर्वकसृप्-धातोः भावलक्षणे तुमर्थे प्रकृतसूत्रेण कसुन्-प्रत्यये अनुबन्धलोपे वि सृप् अस् इति स्थिते कित्त्वात् गुणनिषेधे विसृपस् इति कसुन्प्रत्ययान्तसमुदायो जायते। ततः अस्य समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञा। ततः क्त्वातोसुन्कसुनः इत्यनेन विसृप् अस् इत्यस्य अव्ययसंज्ञायाम् औत्सर्गिके एकवचने सुप्रत्यये विसृपस् स् इति जाते अव्ययादाप्सुपः इति विभक्तिसंज्ञकस्य सोः सकारस्य लुकि पूर्ववत् प्रक्रियया **विसृपः** इति रूपम् सिध्यति।

आ-पूर्वकात् तृद्- धातोः प्रकृतसूत्रेण कसुन्- प्रत्यये पूर्ववत् विभक्तिकार्ये **आतृदः** इति रूपं सिध्यति।

## १८.१०) रात्रेश्चाजसौ॥ (४.१.३१)

**सूत्रार्थः**- रात्रिशब्दान्ङीप्स्यात् अजस्विषये छन्दसि।



**सूत्रावतरणम्-** जस्-भिन्नप्रत्यये परे सति रात्रिशब्दात् ङीप्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन रात्रि- शब्दात् ङीप्-प्रत्ययो विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। रात्रेः च अजसौ इति सूत्रगतपदच्छेदः। रात्रेः इति पञ्चम्यन्तं पदम्। च इति अव्ययपदम्। अजसौ इति सप्तम्यन्तं पदम्। न जसिः अजसिः तस्मिन् अजसौ। इकारः उच्चारणार्थः। नित्यं संज्ञाछन्दसोः इत्यस्मात् सूत्रात् संज्ञाछन्दसोः इति पदमनुवर्तते। संख्याव्ययादेर्ङीप् इत्यस्मात् सूत्रात् ङीप् इत्यनुवर्तते। स्त्रियाम्, प्रत्ययः इति एते अधिक्रियेते। स्त्रियाम् संज्ञाछन्दसोः रात्रेः च ङीप् अजसौ इति वाक्ययोजना। ततश्च सूत्रार्थो भवति स्त्रीत्वविवक्षायां संज्ञाछन्दसोः विषये रात्रिशब्दात् ङीप्-प्रत्ययः स्यात् न तु जसौ इति।

**उदाहरणम्-** रात्री।

**सूत्रार्थसमन्वयः-** रात्रिशब्दात् प्रकृतसूत्रेण **ङीप्-प्रत्यये** अनुबन्धलोपे रात्रि ई इति स्थिते यचि भम् इति भसंज्ञायां यस्येति च इत्यनेन इकारलोपे रात्री इति ङ्यन्तसमुदायो भवति। ततः सुप्रत्यये रात्री सु इति स्थिते उकारलोपे हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इत्यनेन सलोपे रात्री इति रूपं सिद्धम्। अस्य च वेदे प्रयोगः यथा रात्री व्यख्यदायती इति। लोके तु कृदिकारादक्तिनः इति गणसूत्रेण **ङीष्प्रत्ययः** भवति। लोके ङीषि आद्युदात्तश्च इत्यनेन रात्रीशब्दः अन्तोदात्तान्तो भवति। वेदे ङीपि रात्रीशब्दः अनुदात्तौ सुप्पितौ इत्यनेन अनुदात्तान्तो भवति।

**विशेषः-**इदमत्रवधेयं यत् सूत्रे अजसौ इत्युक्तम्। तथा च जस्प्रत्यये परे अस्य सूत्रस्य प्रवृत्तिः न भवति। अत एव यास्ताः रात्रयः इत्यत्र रात्रिशब्दात् परे जस् प्रत्यये प्रकृतसूत्रेण ङीप्-प्रत्ययो न भवति।

## १८.११) नित्यं छन्दसि॥ (४.१.४६)

**सूत्रार्थः-** बह्वादिभ्यश्छन्दसि विषये नित्यं ङीष्।

**सूत्रावतरणम्-** छन्दसि बहुप्रभृतिशब्देभ्यः नित्यं ङीष्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन ङीष्- प्रत्ययो विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। नित्यमिति प्रथमान्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्। बह्वादिभ्यश्च इत्यस्मात् सूत्रात् बह्वादिभ्यः इति पदमनुवर्तते। अन्यतो ङीष् इत्यस्मात् सूत्रात् ङीष् इति पदमनुवर्तते। स्त्रियामिति अधिक्रियते। प्रत्ययः परः इत्युभयम् अधिक्रियते। प्रातिपदिकात् इत्यधिकारः। अनुपसर्जनात् इत्यधिकारः। अधिकृतस्य प्रातिपदिकात् इत्यस्य प्रातिपदिकेभ्यः इति पञ्चमीबहुवचनान्ततया विपरिणामः। अधिकृतस्य अनुपसर्जनात् इत्यस्य अनुपसर्जनेभ्यः इति पञ्चमीबहुवचनान्ततया विपरिणामः। अनुपसर्जनशब्दार्थः मुख्यः प्रधानम् वा।बहुशब्दः आदिः येषां ते बह्वादयः इति बहुव्रीहिसमासः, तेभ्यः बह्वादिभ्यः। सूत्रार्थो हि स्त्रीत्वविवक्षायां छन्दसि बह्वादिगणपठितेभ्यः अनुपसर्जनेभ्यः प्रातिपदिकेभ्यः नित्यं ङीष् स्यादिति।

**उदाहरणम्-** बह्वी।

**सूत्रार्थसमन्वयः-** बहुशब्दात् प्रकृतसूत्रेण ङीष्-प्रत्यये अनुबन्धलोपे बहु ई इति स्थिते इको यणचि इत्यनेन इकः उकारस्य स्थाने यण्-आदेशे वकारे बह्वी इति ङ्यन्तसमुदायो भवति। ततः

सुविभक्तौ पूर्ववत् प्रक्रियया **बह्वी** इति रूपं सिद्धम्। लोके तु वोतो गुणवचनात् इत्यनेन वैकल्पिके ङीष्प्रत्यये **बह्वी, बहु** इति रूपद्वयम् भवति।

## १८.१२) भुवश्च॥ (४.१.४७)

**सूत्रार्थः-** ङीष् स्यात् छन्दसि।

**सूत्रावतरणम्-** वेदे विभ्वी प्रभ्वी इत्यादिरूपसाधनाय भू-धातोः नित्यं ङीष्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन भू- धातोः ङीष्- प्रत्ययो विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। भुवः च इति सूत्रगतपदच्छेदः। च इति अव्ययपदम्। नित्यं छन्दसि इत्यस्मात् सूत्रात् छन्दसि इति पदमनुवर्तते। अन्यतो ङीष् इत्यस्मात् सूत्रात् ङीष् इति पदमनुवर्तते। स्त्रियामिति अधिकारः। प्रत्ययः परः इत्युभयम् अधिक्रियते। ते च प्रथमान्ते पदे, अनुपसर्जनात् इति पञ्चम्यन्तम् पदं, प्रातिपदिकात् इति पञ्चम्यन्तं पदं च अधिक्रियेते। ततश्च सूत्रार्थो भवति छन्दसि स्त्रीत्वविवक्षायाम् अनुपसर्जनात् भुवः प्रातिपदिकात् नित्यं ङीष्प्रत्ययः परः स्यात् इति।

**उदाहरणम्-** विभ्वी। प्रभ्वी।

**सूत्रार्थसमन्वयः-** विपूर्वकात् भू-धातोः विप्रसंभ्यो ड्वसंज्ञायाम् इति सूत्रेण डुप्रत्यये अनुबन्धलोपे भू उ इति जाते। ततः भू-धातोः ऊकारस्य च लोपे डुप्रत्ययान्तात् विभु- इत्यस्मात् प्रकृतसूत्रेण ङीष्-प्रत्यये विभु ई इति स्थिते इको यणचि इति सूत्रेण इकः उकारस्य स्थाने यणि वकारे विभ्वी इति ङ्यन्तसमुदायो भवति। ततः पूर्ववत् विभक्तिकार्ये **विभ्वी** इति रूपं सिद्धम्। (चुटू इत्यनेन डुप्रत्ययस्य डकारः इत्संज्ञकः। तेन उकारमात्रम् शिष्यते।)

एवं प्र- पूर्वकात् भू- धातोः विप्रसंभ्यो ड्वसंज्ञायाम् इत्यनेन डु- प्रत्यये अनुबन्धलोपे च प्रभू उ इति स्थिते धातोः ऊकास्य लोपे वर्णसम्मेलने च प्रभु इति जायते। ततः प्रकृतसूत्रेण ङीष्- प्रत्यये अनुबन्धलोपे च प्रभु ई इति जाते यणि प्रभ्वी इति ङ्यन्तसमुदायो भवति। ततः पूर्ववत् विभक्तिकार्ये **प्रभ्वी** इति रूपं सिध्यति।

## १८.१३) दीर्घजिह्वी च छन्दसि॥ (४.१.५९)

**सूत्रार्थः-** संयोगोपधत्वादप्राप्तौ ङीष् विधीयते।

**सूत्रावतरणम्-** दीर्घजिह्व इति स्थिते स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् इत्यनेन ङीष्-प्रत्ययप्राप्त्यभावे ङीष्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन ङीष्- प्रत्ययो विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। दीर्घजिह्वी इति प्रथमैकवचनान्तं पदम्। च इति अव्ययपदम्। छन्दसि इति सप्तम्यन्तं पदम्। अन्यतो ङीष् इत्यस्मात् सूत्रात् ङीष् इति पदमनुवर्तते। स्त्रियामिति अधिकारः। प्रत्ययः परः इत्युभयम् अधिकृतम्। ते च प्रथमान्ते। प्रातिपदिकात् इत्यधिकृतम्। तच्च पञ्चम्यन्तम्। ततश्च सूत्रार्थो भवति छन्दसि स्त्रीत्वविवक्षायां ङीष्-प्रत्ययः स्यात्।



**उदाहरणम्-** दीर्घजिह्वी।

**सूत्रार्थसमन्वयः-** दीर्घा जिह्वा यस्याः इति बहुव्रीहिसमासे स्वाङ्गाच्चोपसर्जनाद् असंयोगोपधात् इत्यनेन ङीष्-प्रत्ययस्य विधानं न सम्भवति। यतो हि उपधायां संयोगः अस्ति। स्वाङ्गाच्चोपसर्जनाद् असंयोगोपधात् इत्यनेन असंयोगोपधात् एव ङीष्-प्रत्ययः विधीयते। अतः ङीष्-प्रत्ययविधानाय प्रकृतं सूत्रं प्रणीतम्। तेन ङीष्-प्रत्यये अनुबन्धलोपे दीर्घजिह्व ई इति स्थिते यस्येति च इत्यनेन भसंज्ञकस्य अकारस्य लोपे सर्ववर्णसम्मेलने दीर्घजिह्वी इति ङ्यन्तसमुदायो जायते। ततः पूर्ववत् विभक्तिकार्ये **दीर्घजिह्वी** इति रूपम् सिध्यति।

## १८.१४) कद्रुकमण्डल्वोश्छन्दसि॥ (४.१.७१)

**सूत्रार्थः-** ऊङ् स्यात्।

**सूत्रावतरणम्-** कद्रुशब्दात् कमण्डलुशब्दात् च स्त्रीत्वविवक्षायाम् ऊङ्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन ऊङ्- प्रत्ययो विधीयते। द्विपदात्मकमिदं सूत्रम्। कद्रुकमण्डल्वोः छन्दसि इति सूत्रगतपदच्छेदः। कद्रुकमण्डल्वोः इति षष्ठीद्विवचनान्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्। ऊङुतः इत्यस्मात् सूत्रात् ऊङ् इति अनुवर्तते। स्त्रियामिति अधिकारः। प्रत्ययः, परः इत्युभयम् अधिकृतम्। ते च प्रथमान्ते। प्रातिपदिकात् इत्यधिकृतम्। तच्च पञ्चम्यन्तम्। ततश्च सूत्रार्थो भवति छन्दसि स्त्रीत्वविवक्षायाम् कद्रु-कमण्डलुशब्दाभ्याम् प्रातिपदिकाभ्याम् परः ऊङ्-प्रत्ययः स्यात् इति। ऊङः ङकारः हलन्त्यम् इत्यनेन इत्संज्ञकः। तेन ऊमात्रम् शिष्यते।

**उदाहरणम्-**कद्रूः।

**सूत्रार्थसमन्वयः-** कद्रुशब्दात् स्त्रीत्वविवक्षायां प्रकृतसूत्रेण ऊङ्-प्रत्यये अनुबन्धलोपे कद्रु ऊ इति स्थिते सवर्णदीर्घे कद्रू इति ऊङन्तसमुदायो जायते। ततः प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् इति परिभाषासहयोगेन सौ रुत्वे विसर्गे **कद्रूः** इति रूपम्। एवं **कमण्डलूः** इत्यपि बोध्यम्।

## १८.१५) छन्दसि ठञ्॥ (४.३.१९)

**सूत्रार्थः-** छन्दसि वर्षाभ्यः ठञ् स्यात्।

**सूत्रावतरणम्-** लोके वर्षाशब्दात् ठक्-प्रत्ययो विधीयते। परन्तु वेदे वर्षाशब्दात् ठञ्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन ठक्- प्रत्ययो विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। सूत्रमिदं वर्षाभ्यष्ठक् इति सूत्रस्य अपवादः। छन्दसि इति सप्तम्यन्तं पदम्। ठञ् इति प्रथमान्तं पदम्। वर्षाभ्यष्ठक् इत्यस्मात् सूत्रात् वर्षाभ्यः इत्यनुवर्तते। प्रत्ययः, परः इत्युभयम् अधिकृतम्। ते च प्रथमान्ते। शेषे, तद्धिताः इत्युभयमपि अधिकृतम्। प्रातिपदिकात् इत्यधिकृतम्। तस्य पञ्चमीबहुवचनान्ततया विपरिणामः। ततश्च सूत्रार्थो भवति वेदे वर्षादिभ्यः प्रातिपदिकेभ्यः शैषिकः तद्धितसंज्ञकः ठञ्-प्रत्ययः परः स्यात् इति।



**उदाहरणम्-** वार्षिकम्।

**सूत्रार्थसमन्वयः-** वर्षासु भवम् इति विग्रहे वर्षाशब्दात् प्रकृतसूत्रेण ठञ्-प्रत्यये वर्षा ठञ् इति स्थिते ञकारस्य हलन्त्यम् इति इत्संज्ञायाम् इत्संज्ञकस्य ञकारस्य तस्य लोपः इति लोपे वर्षा ठ इति स्थिते ठस्येकः इत्यनेन ठस्य इक-आदेशे वर्षा इक इति स्थिते यचि भम् इत्यनेन वर्षा इत्यस्य भसंज्ञायां यस्येति च इत्यनेन आकारस्य लोपे वर्ष् इक इति स्थिते अकारस्य तद्धितेष्वचामादेः इति सूत्रेण वृद्धौ आकारे वार्ष् इक इति स्थिते सु-प्रत्यये सु-इत्यस्य स्थाने अमि वार्ष् इक अम् इति स्थिते अमि पूर्वः इत्यनेन पूर्वरूपैकादेशे **वार्षिकम्** इति रूपं सिद्धम्। लोकेऽपि ठक्प्रत्यये **वार्षिकम्** इति रूपम् भवति। तर्हि को भेदः इति चेत् ठञि ञ्नित्यादिर्नित्यम् इति आद्युदात्तः। ठकि तु कितः इति अन्तोदात्तः। इति स्वरे भेदः। ठञि तद्धितेष्वचामादेः इति आद्यचः वृद्धिः। ठकि तु किति च इत्यनेन आद्यचः वृद्धिः।

## १८.१६) वसन्ताच्च॥ (४.३.२०)

**सूत्रार्थः-** ठञ् स्यात् छन्दसि।

**सूत्रावतरणम्-** वेदे ऋतुवाचिवसन्तशब्दात् ठञ्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन ठञ्- प्रत्ययो विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। वसन्तात् च इति सूत्रगतपदच्छेदः। वसन्तात् इति पञ्चम्यन्तं पदम्। च इति अव्ययपदम्। छन्दसि ठञ् इति सम्पूर्णं सूत्रमत्रानुवर्तते। कालाड्ठञ् इत्यस्मात् सूत्रात् कालात् इत्यनुवर्तते। प्रत्ययः, परः इत्युभयम् अधिकृतम्। ते च प्रथमान्ते पदे। प्रातिपदिकात् इत्यधिकृतम्। तच्च पञ्चम्यन्तम्। शेषे, तद्धिताः इत्युभयमपि अधिकृतम्। ततश्च सूत्रार्थो भवति छन्दसि (काल) ऋतुवाचकात् वसन्तशब्दात् शैषिकः तद्धितसंज्ञकः ठञ्-प्रत्ययः परः स्यात् इति।

**उदाहरणम्-** वासन्तिकम्।

**सूत्रार्थसमन्वयः-** वसन्ततौ भवम् इति व्युत्पत्त्या ऋतुवाचिवसन्तशब्दात् प्रकृतसूत्रेण ठञ्-प्रत्यये वसन्त ठञ् इति स्थिते ञकारस्य हलन्त्यम् इति इत्संज्ञायाम् इत्संज्ञकस्य ञकारस्य तस्य लोपः इति लोपे वसन्त ठ इति स्थिते ठस्येकः इत्यनेन ठस्य इक-आदेशे वसन्त इक इति स्थिते यचि भम् इत्यनेन भसंज्ञायां यस्येति च इत्यनेन अकारस्य लोपे वसन्त् इक इति स्थिते वकारोत्तरवर्तिनः अकारस्य तद्धितेष्वचामादेः इत्यनेन वृद्धौ आकारे वासन्त् इक इति स्थिते तद्धितान्तत्वात् कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञायां सु-प्रत्यये सु-इत्यस्य स्थाने अमि वासन्त् इक अम् इति स्थिते अमि पूर्वः इत्यनेन पूर्वरूपैकादेशे **वासन्तिकम्** इति रूपं सिद्धम्।

## १८.१७) हेमन्ताच्च॥ (४.३.२१)

**सूत्रार्थः-** छन्दसि ठञ्।

**सूत्रावतरणम्-** वेदे हेमन्तशब्दात् ठञ्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन ठञ्- प्रत्ययो विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। हेमन्तात् च इति सूत्रगतपदच्छेदः। हेमन्तात् इति पञ्चम्यन्तं पदम्। च इति अव्ययपदम्। छन्दसि ठञ् इति



सम्पूर्णं सूत्रमत्रानुवर्तते। कालाट्ठञ् इत्यस्मात् सूत्रात् कालात् इत्यनुवर्तते। प्रत्ययः, परः इत्युभयम् अधिकृतम्। ते च प्रथमान्ते पदे। प्रातिपदिकात् इत्यधिकृतम्। तच्च पञ्चम्यन्तम्। शेषे, तद्धिताः इत्युभयमपि अधिकृतम्। ततश्च सूत्रार्थो भवति छन्दसि कालवाचकात् हेमन्तशब्दात् शैषिकः तद्धितसंज्ञकः ठञ्-प्रत्ययः परः स्यात् इति।

**उदाहरणम्-** हैमन्तिकम्।

**सूत्रार्थसमन्वयः-** हेमन्ते भवम् इति व्युत्पत्त्या हेमन्तशब्दात् प्रकृतसूत्रेण ठञ्-प्रत्यये हेमन्त ठञ् इति स्थिते ञकारस्य हलन्त्यम् इति इत्संज्ञायाम् इत्संज्ञकस्य ञकारस्य तस्य लोपः इति लोपे हेमन्त ठ इति स्थिते ठस्येकः इत्यनेन ठस्य इक-आदेशे हेमन्त इक इति स्थिते यचि भम् इत्यनेन भसंज्ञायां यस्येति च इत्यनेन तकारोत्तरवर्तिनः अकारस्य लोपे हेमन्त् इक इति स्थिते एकारस्य तद्धितेष्वचामादेः इत्यनेन वृद्धौ ऐकारे हैमन्त् इक इति स्थिते सु-प्रत्यये सु-इत्यस्य स्थाने अमि हैमन्त् इक अम् इति स्थिते अमि पूर्वः इत्यनेन पूर्वरूपैकादेशे **हैमन्तिकम्** इति रूपं सिद्धम्।

## १८.१८) द्व्यचश्छन्दसि॥ (४.३.१५०)

**सूत्रार्थः-** विकारे मयट् स्यात्।

**सूत्रावतरणम्-** शरस्य (तृणविशेषस्य) विकारः इति विग्रहे मयट्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन मयट्- प्रत्ययो विधीयते। द्विपदात्मकमिदं सूत्रम्। द्व्यचः छन्दसि इति सूत्रगतपदच्छेदः। द्व्यचः इति पञ्चम्यन्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्। मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः इत्यस्मात् सूत्रात् मयट् इत्यनुवर्तते। तस्य विकारः इति सूत्रात् विकारः इत्यनुवर्तते। विकारः इत्यस्य सप्तम्यन्ततया विपरिणामः। अवयवे च प्राण्योषधिवृक्षेभ्यः इत्यस्मात् सूत्रात् अवयवे इति अनुवर्तते। प्रत्ययः, परः इत्युभयम् अधिकृतम्। ते च प्रथमान्ते पदे। प्रातिपदिकात् इत्यधिकृतम्। तच्च पञ्चम्यन्तम्। तद्धिताः इति अधिकृतम्। समर्थानां प्रथमाद्वा इत्यतः समर्थानाम् इत्यस्य अनुवृत्तिरस्ति। तस्य च समर्थात् इति पञ्चम्येकवचनान्ततया विपरिणामः। ततश्च सूत्रार्थो भवति छन्दसि द्व्यचः समर्थात् प्रातिपदिकात् विकारे अवयवे चार्थे तद्धितसंज्ञकः मयट्-प्रत्ययः परः स्यात् इति। मयटः टकारः हलन्त्यम् इत्यनेन इत्संज्ञकः। तेन मय इत्येव शिष्यते।

**उदाहरणम्-** शरमयम्।

**सूत्रार्थसमन्वयः-** शरस्य (तृणविशेषस्य) विकारः इति विग्रहे प्रकृतसूत्रेण मयट्-प्रत्यये अनुबन्धलोपे शर मय इति स्थिते शरमय इति तद्धितान्तसमुदायो भवति। ततः सौ विभक्तिकार्ये **शरमयम्** इति रूपम्।

## १८.१९) नोत्वद्वर्ध्रबिल्वात्॥ (४.३.१५१)

**सूत्रार्थः-** वेदे द्व्यचः उत्वात् वर्ध्रबिल्वशब्दात् विकारार्थे मयट् न।



**सूत्रावतरणम्-** वेदे द्व्यचः उकारवतः प्रातिपदिकात् वर्ध्रबिल्वशब्दात् विकारार्थे मयट्-प्रत्ययनिषेधार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन मयट्- प्रत्ययस्य निषेधो विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। न इति अव्ययपदम्। उत्वद्-वर्ध्र-बिल्वात् इति पञ्चम्यन्तं पदम्। द्व्यचश्छन्दसि इति सम्पूर्णं सूत्रमनुवर्तते। मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः इत्यस्मात् सूत्रात् मयट् इत्यनुवर्तते। तस्य विकारः इति सूत्रात् विकारः इत्यनुवर्तते। तस्य च विकारे इति सप्तम्यन्ततया विपरिणामः। अवयवे च प्राण्योषधिवृक्षेभ्यः इत्यस्मात् सूत्रात् अवयवे इति अनुवर्तते। प्रत्ययः, परः इत्युभयम् अधिकृतम्। ते च प्रथमान्ते पदे। प्रातिपदिकात् इत्यधिकृतम्। तच्च पञ्चम्यन्तम्। तद्धिताः इत्यधिकृतम्। ततश्च सूत्रार्थो भवति छन्दसि द्व्यचः ह्रस्व-उकारवतः प्रातिपदिकात् वर्ध्रबिल्वशब्दात् विकारे अवयवे चार्थे तद्धितसंज्ञकः मयट्-प्रत्ययः परो न स्यात् इति।

**उदाहरणम्-**वार्ध्री।

**सूत्रार्थसमन्वयः**- वर्ध्रस्य विकारः इति विग्रहे द्व्यचश्छन्दसि इत्यनेन प्राप्तस्य मयट्-प्रत्ययस्य निषेधे अण्-प्रत्यये अनुबन्धलोपे वर्ध्र अ इति स्थिते अणः अकारात् पूर्ववर्तिनः भसंज्ञकस्य अकारस्य लोपे वर्ध्र इति जायते। ततः तद्धितेष्वचामादेः इत्यनेन वकारोत्तरवर्तिनः अकारस्य वृद्धौ आकारे वर्णसम्मेलने वार्ध्र इति जाते टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इत्यनेन ङीप्-प्रत्यये अनुबन्धलोपे वार्ध्र ई इति जाते ईकारात् पूर्ववर्तिनः भसंज्ञकस्य अकारस्य लोपे वर्णसम्मेलने वार्ध्री इति जायते। ततः विभक्तिकार्ये **वार्ध्री** इति रूपम् सिध्यति।

## १८.२०) ढश्छन्दसि॥ (४.४.१०६)

**सूत्रार्थः**- सप्तम्यन्तात् समर्थात् सभाप्रातिपदिकात् साध्वर्थे ढः स्यात्।

**सूत्रावतरणम्-** सभाप्रातिपदिकात् साध्वर्थे ढ- प्रत्ययस्य विधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन ढ- प्रत्ययो विधीयते। द्विपदम् सूत्रम्। ढः छन्दसि इति सूत्रगतपदच्छेदः। ढः इति प्रथमान्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्। सभाया यः इत्यस्मात् सूत्रात् सभायाः इत्यनुवर्तते। तत्र साधुः इत्यस्मात् सूत्रात् साधुः इत्यनुवर्तते। तच्च सप्तम्यन्ततया विपरिणमते। प्रत्ययः, परः इत्युभयम् अधिकृतम्। ते च प्रथमान्ते पदे। प्रातिपदिकात् इत्यधिकृतम्। तच्च पञ्चम्यन्तम्। तद्धिताः इत्यधिकृतम्। ततश्च सूत्रार्थो भवति साध्वर्थे छन्दसि सभाप्रातिपदिकात् तद्धितसंज्ञकः ढप्रत्ययः परः स्यात् इति।

**उदाहरणम्-** सभेयः।

**सूत्रार्थसमन्वयः**- सभायां साधुः इति विग्रहे सभाशब्दात् प्रकृतसूत्रेण ढप्रत्यये सभा ढ इति स्थिते आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् इत्यनेन ढस्य स्थाने एयादेशे सभा एय इति स्थिते यचि भम् इत्यनेन भसंज्ञायां यस्येति च इत्यनेन आकारलोपे सभ् एय इति स्थिते वर्णसंयोगे निष्पन्नात् सभेयशब्दात् सौ विभक्तिकार्ये **सभेयः** इति रूपम्। लोके तु यत्प्रत्यये **सभ्यः** इति रूपम्।



## १८.२१) भवे छन्दसि॥ (४.४.११०)

**सूत्रार्थः-** सप्तम्यन्तात् भवार्थे यत्।

**सूत्रावतरणम्-** मेघे भवः इति विग्रहे मेघप्रातिपदिकात् यत्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन यत्- प्रत्ययो विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। भवे इति सप्तम्यन्तं पदम्। छन्दसि इत्यपि सप्तम्यन्तं पदम्। प्राग्घिताद्यत् इति सूत्रात् यत् इत्यनुवर्तते। प्रत्ययः, परः इत्युभयम् अधिकृतम्। ते च प्रथमान्ते पदे। प्रातिपदिकात् इत्यधिकृतम्। तच्च पञ्चम्यन्तम्। तद्धिताः इत्यधिकृतम्। तत्र भवः इत्यस्मात् सूत्रात् तत्र इत्यनुवर्तते। ततश्च सूत्रार्थो भवति सप्तम्यन्तात् भवे अर्थे विद्यमानात् प्रातिपदिकात् तद्धितसंज्ञकः यत्-प्रत्ययः परः स्यात् छन्दसि इति।

**उदाहरणम्-** मेघ्यः।

**सूत्रार्थसमन्वयः-** मेघे भवः इति विग्रहे सप्तम्यन्तात् भवे अर्थे विद्यमानात् मेघप्रातिपदिकात् प्रकृतसूत्रेण यत्-प्रत्यये मेघ यत् इति स्थिते अनुबन्धलोपे मेघ य इति स्थिते यचि भम् इत्यनेन भसंज्ञायां यस्येति च इत्यनेन अकारलोपे सर्ववर्णसम्मेलनेन निष्पन्नात् मेघ्य इति प्रातिपदिकात् सौ विभक्तिकार्ये **मेघ्यः** इति रूपम्।

## १८.२२) पाथोनदीभ्यां ड्यण्॥ (४.४.१११)

**सूत्रार्थः-** पाथोनदीभ्यां प्रातिपदिकाभ्यां छन्दसि भवेऽर्थे ड्यण्-प्रत्ययः स्यात्।

**सूत्रावतरणम्-** पाथस्-प्रातिपदिकात् नदीप्रातिपदिकात् च छन्दसि भवे अर्थे ड्यण्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन ड्यण्- प्रत्ययो विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। पाथोनदीभ्याम् इति पञ्चमीबहुवचनान्तं पदम्। ड्यण् इति प्रथमान्तं पदम्। भवे छन्दसि इति सम्पूर्णं सूत्रमत्रानुवर्तते। प्रत्ययः, परः इत्युभयम् अधिकृतम्। ते च प्रथमान्ते पदे। प्रातिपदिकात् इत्यधिकृतम्। तच्च पञ्चम्यन्तम्। तद्धिताः इत्यधिकृतम्। तत्र भवः इत्यस्मात् सूत्रात् तत्र इत्यनुवर्तते। ततश्च सूत्रार्थो भवति तत्र भवः इत्यर्थे विद्यमानाभ्यां पाथोनदीभ्यां प्रातिपदिकाभ्यां तद्धितसंज्ञकः ड्यण्-प्रत्ययः परः स्यात् छन्दसि इति।

**उदाहरणम्-** पाथ्यः।

**सूत्रार्थसमन्वयः-** पाथसि भवः इति विग्रहे भवे अर्थे विद्यमानात् पाथस् इति प्रातिपदिकात् प्रकृतसूत्रेण ड्यण्-प्रत्यये पाथस् ड्यण् इति स्थिते अनुबन्धलोपे पाथस् य इति स्थिते डित्त्वसामर्थ्यात् टेः लोपे पाथ् य इति स्थिते सौ रुत्वे विसर्गे **पाथ्यः** इति रूपम्।

## १८.२३) सगर्भसयूथसनुताद्यन्॥ (४.४.११४)

**सूत्रार्थः-** सप्तम्यन्तात् सगर्भसयूथसनुताद् प्रातिपदिकात् भवार्थे यन् भवति।



**सूत्रावतरणम्-** छन्दसि सगर्भसयूथसनुतात् प्रातिपदिकात् भवेऽर्थे विद्यमानात् यन्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन यन्- प्रत्ययो विधीयते। द्विपदम् सूत्रम्। सगर्भसयूथसनुतात् यन् इति सूत्रगतपदच्छेदः। सगर्भसयूथसनुतात् इति पञ्चम्यन्तं पदम्। यन् इति प्रथमान्तं पदम्। भवे छन्दसि इति सम्पूर्णं सूत्रमत्रानुवर्तते। प्रत्ययः, परः इत्युभयम् अधिकृतम्। ते च प्रथमान्ते पदे। प्रातिपदिकात् इत्यधिकृतम्। तच्च पञ्चमीबहुवचनान्ततया विपरिणमते। तद्धिताः इत्यधिकृतम्। तत्र भवः इत्यस्मात् सूत्रात् तत्र इत्यनुवर्तते। ततश्च सूत्रार्थो भवति भवे अर्थे विद्यमानेभ्यः सप्तम्यन्तेभ्यः सगर्भ-सयूथ-सनुतप्रातिपदिकेभ्यः तद्धितसंज्ञकः यन्-प्रत्ययः परः स्यात् छन्दसि इति।

**उदाहरणम्-** सगर्भ्यः। सयुथ्यः। सनुत्यः।

**सूत्रार्थसमन्वयः-** सगर्भे भवः इति विग्रहे भवे अर्थे विद्यमानात् प्रकृतसूत्रेण यन्-प्रत्यये सगर्भ यन् इति स्थिते अनुबन्धलोपे सगर्भ य इति स्थिते यचि भम् इत्यनेन भसंज्ञायां यस्येति च इत्यनेन अकारलोपे सगर्भ् य इति स्थिते संयोगे निष्पन्नात् सगर्भ्यशब्दात् सौ विभक्तिकार्ये **सगर्भ्यः** इति रूपम्। एवमेव **सयुथ्यः, सनुत्यः** च इति रूपे सिध्यतः।

## १८.२४) बर्हिषि दत्तम्॥ (४.४.११९)

**सूत्रार्थः-** छन्दसि बर्हिष्-प्रातिपदिकात् दत्तार्थे यत् स्यात्।

**सूत्रावतरणम्-** बर्हिःषु दत्ता इति विग्रहे बर्हिष्-प्रातिपदिकात् यत्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन यत्- प्रत्ययो विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। बर्हिषि इति सप्तम्यन्तं पदम्। दत्तमिति प्रथमान्तं पदम्। भवे छन्दसि इत्यस्मात् सूत्रात् छन्दसि इति पदमनुवर्तते। प्राग्घिताद्यत् इति सूत्रात् यत् इति अनुवर्तते। प्रत्ययः, परः इत्युभयम् अधिकृतम्। ते च प्रथमान्ते पदे। प्रातिपदिकात् इत्यधिकृतम्। तच्च पञ्चम्यन्तम्। तद्धिताः इत्यधिकृतम्। तत्र भवः इत्यस्मात् सूत्रात् तत्र इत्यनुवर्तते। ततश्च सूत्रार्थो भवति सप्तम्यन्तात् समर्थात् बर्हिष्-प्रातिपदिकात् दत्तार्थे तद्धितसंज्ञकः यत्-प्रत्ययः परः स्यात् इति।

**उदाहरणम्-** वर्हिष्येषु।

**सूत्रार्थसमन्वयः-** बर्हिःषु दत्ता इति विग्रहे दत्तार्थे विद्यमानात् बर्हिष्-प्रातिपदिकात् प्रकृतसूत्रेण यत्-प्रत्यये बर्हिस् यत् इति स्थिते अनुबन्धलोपे बर्हिस् य इति स्थिते सकारस्य षकारे बर्हिष् य इति स्थिते वर्णसंयोगे निष्पन्नात् बर्हिष्-प्रातिपदिकात् सुप्-प्रत्यये विभक्तिकार्ये **बर्हिष्येषु** इति रूपम्।

## १८.२५) दूतस्य भागकर्मणी॥ (४.४.१२०)

**सूत्रार्थः-** षष्ठीसमर्थात् दूतप्रातिपदिकात् भागकर्मार्थे छन्दसि यत् प्रत्ययः स्यात्।

**सूत्रावतरणम्-** दूतस्य भागः कर्म वा इति विग्रहे दूतशब्दात् यत्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।



**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन यत्- प्रत्ययो विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। दूतस्य इति षष्ठ्यन्तं पदम्। भागकर्मणी इति प्रथमान्तं पदम्। भवे छन्दसि इत्यस्मात् सूत्रात् छन्दसि इति पदमनुवर्तते। प्राग्घिताद्यत् इति सूत्रात् यत् इति अनुवर्तते। प्रत्ययः, परः इत्युभयम् अधिकृतम्। ते च प्रथमान्ते पदे। प्रातिपदिकात् इत्यधिकृतम्। तच्च पञ्चम्यन्तम्। तद्धिताः इत्यधिकृतम्। ततश्च सूत्रार्थो भवति षष्ठ्यन्तात् समर्थात् दूत-प्रातिपदिकात् भागकर्मार्थे छन्दसि तद्धितसंज्ञकः यत्-प्रत्ययः परः स्यात् इति।

**उदाहरणम्-** दूत्यम्।

**सूत्रार्थसमन्वयः-** दूतस्य भागः कर्म वा इति विग्रहे दूतशब्दात् प्रकृतसूत्रेण यत्-प्रत्यये तकारस्य इत्संज्ञायां तस्य लोपः इत्यनेन तस्य लोपे दूत यत् इति स्थिते दूत य इति स्थिते यचि भम् इत्यनेन भसंज्ञायां यस्येति च इत्यनेन अकारलोपे संयोगे निष्पन्नात् दूत्य-प्रातिपदिकात् सौ विभक्तिकार्ये **दूत्यम्** इति रूपम्।

## १८.२६) रेवतीजगतीहविष्याभ्यः प्रशस्ये॥ (४.४.१२२)

**सूत्रार्थः-** प्रशंसने यत्स्यात्।

**सूत्रावतरणम्-** रेवत्याः प्रशस्यम् इति विग्रहे रेवतीशब्दात् यत्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन यत्- प्रत्ययो विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। रेवतीजगतीहविष्याभ्यः इति पञ्चम्यन्तं पदम्। प्रशस्ये इति सप्तम्यन्तं पदम्। भवे छन्दसि इत्यस्मात् सूत्रात् छन्दसि इति पदमनुवर्तते। प्राग्घिताद्यत् इति सूत्रात् यत् इति अनुवर्तते। प्रत्ययः, परः इत्युभयम् अधिकृतम्। ते च प्रथमान्ते पदे। प्रातिपदिकात् इत्यधिकृतम्। तच्च बहुवचनान्ततया विपरिणमते। तद्धिताः इत्यधिकृतम्। ततश्च सूत्रार्थो भवति छन्दसि रेवतीजगतीहविष्याभ्यः प्रातिपदिकेभ्यः तद्धितसंज्ञकः यत्-प्रत्ययः परः स्यात् इति।

**उदाहरणम्-** रेवत्यम्।

**सूत्रार्थसमन्वयः-** रेवत्याः प्रशस्यम् इति विग्रहे रेवतीशब्दात् प्रकृतसूत्रेण यत्-प्रत्यये तकारस्य हलन्त्यम् इत्यनेन इत्संज्ञायां तस्य लोपः इत्यनेन तस्य लोपे रेवती य इति स्थिते यचि भम् इत्यनेन भसंज्ञायां यस्येति च इत्यनेन ईकारलोपे रेवत् य इति स्थिते संयोगे निष्पन्नात् रेवत्यप्रातिपदिकात् सौ विभक्तिकार्ये **रेवत्यम्** इति रूपम्।



## पाठगतप्रश्नाः-२

६. रात्रेश्चाजसौ अनेन कः प्रत्ययो विधीयते।

७. हैमन्तिकम् इत्यत्र कः प्रत्ययः।

८. वर्षासु भवम् इत्यर्थे किं रूपम्। कश्च प्रत्ययः।



९. वेदे ङीष्-प्रत्ययविधायकं सूत्रमेकं लिखत।
१०. नित्यं छन्दसि इत्यस्य कोऽर्थः।
११. दूत्यमित्यत्र केन सूत्रेण यत् प्रत्ययः।
१२. सगर्भ्यः इत्यस्य विग्रहं लिखत।
१३. भसंज्ञाविधायकं सूत्रमेकं लिखत।
१४. पाथोनदीभ्यां ड्यण् इति सूत्रस्य अर्थं लिखत।
१५. मेघ्यः इत्यत्र यत्-प्रत्ययविधायकं सूत्रं किम्।
१६. हैमन्तिकं वासान्तिकम् इत्यत्र च यथाक्रमं ठञ्-प्रत्ययविधायकं सूत्रं लिखत।
१७. रेवत्यमित्यत्र कः प्रत्ययः। केन च विधीयते।



## पाठसारः

पाठेऽस्मिन् एते विषया आलोचिताः सन्ति। छन्दसि पणबन्धे आशङ्कायां च लेट्- लकारो भवति। छन्दसि हौ परे हल उत्तरस्य श्ना-प्रत्ययस्तु भवत्येव तेन सह शायच्- प्रत्ययः अपि भवति। व्यत्ययो बहुलम् इति सूत्रेण छन्दसि विकरणप्रत्ययानां बहुलं व्यत्ययो भवति। छन्दस्युभयथा इति सूत्रेण धात्वधिकारे उक्ताः प्रत्ययाः सार्वधातुकसंज्ञकाः अपि भवन्ति, आर्धधातुकसंज्ञाकाः अपि भवन्ति। तुमर्थे से.... इत्यादिसूत्रेण से, सेन्, असे- इत्यादयः प्रत्ययाः विधीयन्ते। दृशे विख्ये च इति सूत्रेण छन्दसि दृशे विख्ये इत्येते रपे निपात्येते। शकि णमुल्कमुलौ इत्यादिभिः सूत्रैः छन्दसि णमुल्, कमुल्, तोसुन् कसुन्- इत्यादयः प्रत्ययाः विधीयन्ते। छन्दसि जस्-भिन्ने प्रत्यये परे रात्रेश्चाजसौ इति सूत्रेण रात्रि-शब्दात् ङीप्-प्रत्ययो विधीयते। नित्यं छन्दसि इति सूत्रेण बह्वादिभ्यश्छन्दसि विषये नित्यं ङीष्-प्रत्ययो भवति। भुवश्च इत्यादिभिः सूत्रैः विभिन्नेभ्यः प्रातिपदिकेभ्यः छन्दसि विशेषरूपेण ङीषादिप्रत्ययाः विधीयन्ते। छन्दसि ठञ् इत्यादिभिः सूत्रैः वर्षा इत्यादिभ्यः प्रातिपदिकेभ्यः विभिन्नेषु अर्थेषु ठञादयः तद्धितप्रत्ययाः विधीयन्ते।



## पाठान्तप्रश्नाः

१. गृभाय इति रूपं साधयत।
२. छन्दस्युभयथा इति सूत्रं व्याख्यात।
३. दृशे विख्ये च इति रूपं साधयत।
४. अपलुम्प, विभाजं चेति रूपद्वयं ससूत्रं साधयत।
५. ईश्वरे तोसुन्कसुनौ इति सूत्रं व्याख्यात।
६. रात्री इति रूपं ससूत्रं साधयत।



७. विभ्वी, प्रभ्वी चेति रूपद्वयं ससूत्रं साधयत।
८. दीर्घजिह्वी इति रूपं ससूत्रं साधयत।
९. वासन्तिकम् इति रूपं ससूत्रं साधयत।
१०. हैमन्तिकम् इति रूपं ससूत्रं साधयत।
११. वार्ध्री इति रूपम् ससूत्रं साधयत।
१२. ढश्छन्दसि इति सूत्रं व्याख्यात।
१३. पाथ्यः इति रूपं ससूत्रं साधयत।
१४. रैवत्यम् इति रूपं साधयत।



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तरकूटः-१**

१. णमुल्-प्रत्ययः।
२. तुमर्थे।
३. साधु।
४. धात्वधिकारे उक्तः प्रत्ययः सार्वधातुकार्धधातुकोभयसंज्ञः स्यात्।
५. छन्दसि शायजपि इत्यनेन शायच्-प्रत्ययः।

**उत्तरकूटः-२**

६. ङीप्।
७. ठञ्।
८. वार्षिकम्। ठञ्।
९. दीर्घजिह्वी च छन्दसि।
१०. बह्वादिभ्यश्छन्दसि विषये नित्यं ङीष्।
११. दूतस्य भागकर्मणी।
१२. सगर्भे भवः इति।
१३. यचि भम्।
१४. पाथोनदीभ्यां प्रातिपदिकाभ्यां छन्दसि भवेऽर्थे ड्यण्-प्रत्ययः स्यात् इति।
१५. भवे छन्दसि।
१६. हेमन्ताच्च, वसन्ताच्च चेति।
१७. यत्प्रत्ययः, रेवतीजगतीहविष्याभ्यः प्रशस्ये इति सूत्रेण।

---

## इति अष्टादशः पाठः

---

## १९

# अष्टाध्याय्याः चतुर्थः अध्यायः

## प्रस्तावना

अस्मिन् पाठे अष्टाध्याय्याः चतुर्थाध्यायस्य चितानि सूत्राणि प्रामुख्येन व्याखास्यन्ते। द्वित्राणि च पञ्चमाध्यायस्यापि। पूर्वस्मिन् पाठे भवान् लेट्-लकारस्य अपि च कसुन्-ङीप्-ङीष्-ऊङ्-ठञ्-मयट्-ढ-ड्यण्-यत् इत्यादिप्रत्ययानाम् प्रयोगान् ज्ञातवान्। अस्मिन् पाठे यत्-ञ-यल्-घ-तातिल्-अञ्-वति इत्येषाम् विशिष्टानाम् तद्धितप्रत्ययानाम् विषये आलोचना करिष्यते। तेषां कस्मात् शब्दात् कस्मिन्नर्थे प्रयोगः भवति इत्यत्र प्रतिपादयिष्यते। अत्र मत्वर्थे मासतन्वोः, मधोर्ञ च, ओजसोऽहनि यत्खौ, वेशोयशआदेर्भगाद्यल्, ख च, सोममर्हति यः चेत्यादीनि विशेषसूत्राणि व्याख्यास्यन्ते। वैदिकशब्दानाम् लौकिकरूपाणि अपि अत्र प्रदर्शयिष्यन्ते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- वेदे मत्वर्थे प्रातिपदिकेभ्यः के प्रत्ययाः विधीयन्ते इति ज्ञास्यति।
- मासतन्त्वोः अर्थयोः प्रातिपदिकेभ्यः के प्रत्ययाः भवन्ति इति अवगमिष्यति।
- विशिष्टानाम् तद्धितप्रत्ययानाम् परिचयं प्राप्नुयात्।
- तद्धितान्तशब्दानाम् प्रक्रियां ज्ञास्यति।

## १९.१) मत्वर्थे मासतन्वोः॥ (४.४.१२८)

**सूत्रार्थः-** मासतन्वोः प्रातिपदिकात् मत्वर्थे यत् स्याच्छन्दसि।

**सूत्रावतरणम्-** नभः अस्ति अस्मिन् इति विग्रहे यत्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अस्मिन् सूत्रे द्वे पदे स्तः। मत्वर्थे इति सप्तम्यन्तं पदम्। मासतन्वोः इति सप्तमीद्विवचनान्तं पदम्। भवे छन्दसि इत्यस्मात् सूत्रात् छन्दसि इति पदमनुवर्तते। प्राग्घिताद्यत् इति सूत्रात् यत् इति अनुवर्तते। ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् इति पञ्चम्यन्तं पदम् अनुवर्तते। प्रत्ययः परः चेति पदद्वयम् अत्र अधिकृतमस्ति। तद्धिताः इत्यधिक्रियते। तस्य च प्रथमैकवचनान्ततया विपरिणामः। छन्दसि मासतन्वोः प्रातिपदिकात् तद्धितः यत् प्रत्ययः परः इति पदयोजना। ततश्च सूत्रार्थो भवति छन्दसि विषये मासतन्वोः अर्थयोः वर्तमानात् प्रातिपदिकात् मत्वर्थे यत्-प्रत्ययः स्यात् छन्दसि विषये इति।



**उदाहरणम्-** नभस्यः (भाद्रपदः)। ओजस्या (तनूः)।

**सूत्रार्थसमन्वयः-** नभस्- शब्दस्य अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इति सूत्रेण प्रातिपदिकसंज्ञायां तस्माच्च नभस्- प्रातिपदिकात् नभः अस्मिन् अस्ति इति विग्रहे प्रकृतसूत्रेण यत्- प्रत्यये नभस् यत् इति स्थिते यत्- प्रत्ययान्त्यस्य तकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण च तस्य इत्संज्ञकस्य तकारस्य लोपे नभस् य इति स्थिते संयोगे निष्पन्नस्य नभस्य इति शब्दस्वरूपस्य कृत्प्रत्ययान्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन तस्य प्रातिपदिकसंज्ञा। ततः ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सुप्रत्यये नभस्य सु इति स्थिते अनुनासिकत्वेन पाणिनीयैः प्रतिज्ञातस्य सुप्रत्ययान्त्यस्य उकारस्य उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञायां तस्य लोपः इत्यनेन च तस्य इत्संज्ञकस्य उकारस्य लोपे नभस्य स् इति जाते समुदायस्य सुबन्तत्वात् सुप्तिङन्तं पदम् इत्यनेन तस्य पदसंज्ञायां तदन्त्यस्य सकारस्य स्थाने ससजुषो रुः इत्यनेन रु- इत्यादेशे अनुबन्धलोपे च नभस्य र् इति जाते समुदायस्य अन्त्यस्य रेफस्य स्थाने खरवसानयोर्विसर्जनीयः इत्यनेन विसर्गादेशे सर्ववर्णसम्मेलने **नभस्यः** इति रूपं सिध्यति।

## १९.२) मधोर्ञ च॥ (४.४.१२९)

**सूत्रार्थः-** मधुप्रातिपदिकात् मत्वर्थे मासतन्वोः ञः यच्च स्यात्।

**सूत्रावतरणम्-** मधु अस्ति अस्मिन् इति विग्रहे मधुशब्दात् ञप्रत्ययविधानाय यत्- प्रत्ययविधानाय च सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। मधोः इति पञ्चम्यन्तं पदम्। ञः इति प्रथमान्तम् पदम्। चेति अव्ययपदम्। मत्वर्थे मासतन्वोः इति सम्पूर्णं सूत्रमत्रानुवर्तते। भवे छन्दसि इत्यस्मात् सूत्रात् छन्दसि इति पदमनुवर्तते। प्राग्घिताद्यत् इति सूत्रात् यत् इति अनुवर्तते। प्रातिपदिकात् प्रत्ययः परः चेति अधिकृतमस्ति। तद्धिताः इत्यधिक्रियते। एवञ्च अत्र पदयोजना- छन्दसि मत्वर्थे मासतन्वोः मधोः ञ यत् च तद्धितः प्रत्ययः परः इति। अत्र मासतन्वोः इति पदेन तद्बोधकौ अर्थौ अवगन्तव्यौ। ततश्च सूत्रार्थो भवति छन्दसि विषये मधुप्रातिपदिकात् परं मत्वर्थीयः तद्धितः ञप्रत्ययः यत्प्रत्ययश्च परः स्यात् मासतन्वोः अर्थयोः इति।

**उदाहरणम्-** माधवः मधव्यः चेति।

**सूत्रार्थसमन्वयः-** मधु- शब्दस्य अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इत्यनेन प्रातिपदिकसंज्ञायां ततश्च मधु अस्मिन् अस्ति इति विग्रहे प्रकृतसूत्रेण ञ- प्रत्यये ञ- प्रत्ययादेः ञकारस्य च चुटू इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण च तस्य इत्संज्ञकस्य ञकारस्य लोपे मधु अ इति जाते तद्धितेष्वचामादेः इति सूत्रेण मधु- शब्दस्यादेः अचः अकारस्य वृद्धौ स्थानत आन्तर्यात् आकारे माधु अ इति जाते ओर्गुणः इति सूत्रेण उकारस्य गुणे स्थानत आन्तर्यात् ओकारे माधो अ इति जाते एचोऽयवायावः इति सूत्रेण ओकारस्य च स्थाने अवादेशे माधव् अ इति जाते सर्ववर्णसम्मेलनेन



निष्पन्नस्य माधव इति शब्दस्वरूपस्य तद्धितान्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन तस्य प्रातिपदिकसंज्ञा। ततः ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सुप्रत्यये माधव सु इति स्थिते अनुनासिकत्वेन पाणिनीयैः प्रतिज्ञातस्य सुप्रत्ययान्त्यस्य उकारस्य उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञायां तस्य लोपः इत्यनेन च तस्य इत्संज्ञकस्य उकारस्य लोपे माधव स् इति जाते समुदायस्य सुबन्तत्वात् सुप्तिङन्तं पदम् इत्यनेन तस्य पदसंज्ञायां तदन्त्यस्य सकारस्य स्थाने ससजुषो रुः इत्यनेन रु- इत्यादेशे अनुबन्धलोपे च माधव र् इति जाते समुदायस्य अन्त्यस्य रेफस्य स्थाने खरवसानयोर्विसर्जनीयः इत्यनेन विसर्गादिशे सर्ववर्णसम्मेलने **माधवः** इति रूपं सिध्यति।

मधु- शब्दस्य अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इत्यनेन प्रातिपदिकसंज्ञा। ततः मधु अस्ति अस्मिन् इति विग्रहे मधुशब्दात् प्रकृतसूत्रेण यत्- प्रत्यये मधु यत् इति स्थिते यत्- प्रत्ययान्त्यस्य तकारस्य हलन्त्यम् इति सूत्रेण इत्यंज्ञायां तस्य लोपः इति सूत्रेण च तस्य इत्संज्ञकस्य तकारस्य लोपे मधु य इति स्थिते उकारस्य च गुणे ओकारे मधो य इति स्थिते वान्तो यि प्रत्यये इति सूत्रेण ओकारस्य स्थाने अवादेशे संयोगे निष्पन्नस्य मधव्यशब्दस्य तद्धितान्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन तस्य प्रातिपदिकसंज्ञायां ततश्च ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सुप्रत्यये मधव्य सु इति स्थिते अनुनासिकत्वेन पाणिनीयैः प्रतिज्ञातस्य सुप्रत्ययान्त्यस्य उकारस्य उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञायां तस्य लोपः इत्यनेन च तस्य इत्संज्ञकस्य उकारस्य लोपे मधव्य स् इति जाते समुदायस्य सुबन्तत्वात् सुप्तिङन्तं पदम् इत्यनेन तस्य पदसंज्ञायां तदन्त्यस्य सकारस्य स्थाने ससजुषो रुः इत्यनेन रु- इत्यादेशे अनुबन्धलोपे च मधव्य र् इति जाते समुदायस्य अन्त्यस्य रेफस्य स्थाने खरवसानयोर्विसर्जनीयः इत्यनेन विसर्गादिशे सर्ववर्णसम्मेलने **मधव्यः** इति रूपं सिध्यति।

## १९.३) ओजसोऽहनि यत्खौ॥ (४.४.१३०)

**सूत्रार्थः-** ओजस्-प्रातिपदिकात् मत्वर्थे अहनि यत्-खौ प्रत्ययौ स्तः।

**सूत्रावतरणम्-** ओजः प्रकाशः अस्ति अस्मिन् इति विग्रहे यत्-प्रत्ययविधानाय खप्रत्ययविधानाय च सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन सूत्रेण यत्-प्रत्ययः ख-प्रत्ययश्च विधीयेते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। ओजसः इति पञ्चम्यन्तं पदम्। अहनि इति सप्तम्यन्तं पदम्। मत्वर्थे मासतन्वोः इति सूत्रात् मत्वर्थे इति सप्तम्यन्तं पदमनुवर्तते। यत्खौ इति प्रथमान्तं पदम्। भवे छन्दसि इत्यस्मात् सूत्रात् छन्दसि इति विषयसप्तम्यन्तं पदमनुवर्तते। प्रातिपदिकात् प्रत्ययः परः चेति सूत्रत्रयम् अत्र अधिकृतमस्ति। एवञ्च अत्र पदयोजना- छन्दसि मत्वर्थे अहनि ओजसः प्रातिपदिकात् यत्खौ प्रत्ययः परः इति। ततश्च



सूत्रार्थो भवति छन्दसि विषये अहनि अर्थे ओजस्प्रातिपदिकात् यत्-खौ मत्वर्थीयौ प्रत्ययौ परौ भवतः इति।

**उदाहरणम्-** ओजस्यम्, ओजसीनम् चेति।

**सूत्रार्थसमन्वयः-** ओजस्- शब्दस्य अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इति सूत्रेण प्रातिपदिकसंज्ञायां ततश्च ओजः (प्रकाशः) अस्ति अस्मिन् इति विग्रहे प्रकृतसूत्रेण यत्-प्रत्यये ओजस् यत् इति स्थिते हलन्त्यम् इति सूत्रेण यत्- प्रत्ययान्त्यस्य तकारस्य इत्संज्ञायां तस्य लोपः इत्यनेन च तस्य इत्यंज्ञकस्य तकारस्य लोपे ओजस् य इति स्थिते संयोगे निष्पन्नस्य ओजस्यशब्दस्य तद्धितान्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन तस्य प्रातिपदिकसंज्ञायां ततश्च ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टा-भ्याम्भिस्ङेभ्याम्भ्यस्ङसि-भ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सुप्रत्यये ओजस्य सु इति स्थिते ओजस्- शब्दस्य नपुंसकलिङ्गे प्रवर्तमानत्वात् अदन्तत्वात् च अतोऽम् इति सूत्रेण ओजस्य अम् इति जाते अम्-इत्यस्य विभक्तिश्च इत्यनेन विभक्तिसंज्ञकत्वात् न विभक्तौ तुस्माः इति निषेधसूत्रस्य जागरुकत्वात् हलन्त्यम् इति सूत्रेण तस्य मकारस्य इत्संज्ञाभावे ओजस्य अम् इति जाते अमि पूर्वः इत्यनेन पूर्वरूपैकादेशे अकारे सर्ववर्णसम्मेलने च **ओजस्यम्** इति रूपं सिध्यति।

ओजस्- शब्दस्य अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इति सूत्रेण प्रातिपदिकसंज्ञायां ततश्च ओजः प्रकाशः अस्ति अस्मिन् इति विग्रहे प्रकृतसूत्रेण ततः ख- प्रत्यये ओजस् ख इति जाते आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् इति सूत्रेण खकारस्य स्थाने ईन् इत्यादेशे ओजस् ईन् अ इति जाते वर्णसम्मेलनेन निष्पन्नस्य ओजसीन इति शब्दस्वरूपस्य तद्धितान्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन तस्य प्रातिपदिकसंज्ञायां ततश्च ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सुप्रत्यये ओजसीन सु इति स्थिते ओजस् शब्दस्य क्लीबलिङ्गे प्रवर्तमानत्वात् अदन्तत्वात् च अतोऽम् इति सूत्रेण ओजसीन अम् इति जाते अम्-इत्यस्य विभक्तिश्च इत्यनेन स्थानिवदादेशोऽनल्विधौ इति परिभाषया च विभक्तिसंज्ञकत्वात् न विभक्तौ तुस्माः इति निषेधसूत्रस्य जागरुकत्वात् हलन्त्यम् इति सूत्रेण तस्य मकारस्य इत्संज्ञाभावे ओजसीन अम् इति जाते अमि पूर्वः इत्यनेन पूर्वरूपैकादेशे अकारे सर्ववर्णसम्मेलने च **ओजसीनम्** इति रूपं सिध्यति।

## १९.४) वेशोयशआदेर्भगाद्यल्॥ (४.४.१३१)

**सूत्रार्थः-** वेशो-यश-आदेः भगात् प्रातिपदिकात् मत्वर्थे यल् स्यात्।

**सूत्रावतरणम्-** वेशोभगप्रातिपदिकात् यशोभगप्रातिपदिकात् च यल्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। वेशोयशआदेः इति पञ्चम्यन्तं पदम्। भगात् इति पञ्चम्यन्तं पदम्। भग इति पदस्य श्रीकाममाहात्म्यवीर्ययत्नाऽर्ककीर्तिरूपार्थाः। यल् इति



प्रथमान्तं पदम्। वेशश्च यशश्च वेशयशसी, ते आदौ यस्य स वोशोयशआदिः, तस्मात् वेशोयशआदेः। भवे छन्दसि इत्यस्मात् सूत्रात् छन्दसि इति पदमनुवर्तते। मत्वर्थे मासतन्वोः इति सूत्रात् मत्वर्थे इति पदमनुवर्तते। प्रातिपदिकात् इति पञ्चम्यन्तं पदमत्र अनुवर्तते। प्रत्ययः, परश्च चेति अत्र अधिकृतमस्ति। तेन पदान्वयो भवति- छन्दसि मत्वर्थे वेशोयशआदेः भगात् प्रातिपदिकात् यल् प्रत्ययः परः इति। ततश्च सूत्रार्थो भवति छन्दसि मत्वर्थे वेशोयशआदेः भगप्रातिपदिकात् यल्-प्रत्ययः परः स्यादिति।

**उदाहरणे सूत्रार्थसमन्वयः**- वेशोभग- शब्दस्य समासान्तत्वात् कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञायां ततश्च वेशोभगो विद्यते यस्य स इति विग्रहे प्रकृतसूत्रेण यल्-प्रत्यये वेशोभग यल् इति स्थिते हलन्त्यम् इति सूत्रेण यल्- प्रत्ययान्त्यस्य लकारस्य इत्संज्ञायां तस्य लोपः इत्यनेन तस्य च इत्संज्ञकस्य लकारस्य लोपे वेशोभग य इति स्थिते यचि भम् इत्यनेन वेशोभग इत्यस्य भसंज्ञायां तदन्त्यस्य अकारस्य यस्येति च इत्यनेन लोपे वेशोभग् य इति स्थिते संयोगे निष्पन्नस्य वेशोभग्य इति शब्दस्वरूपस्य तद्धितान्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन तस्य प्रातिपदिकसंज्ञायां ततश्च ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टा-भ्याम्भिस्ङेभ्याम्भ्यस्ङसि-भ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सुप्रत्यये वेशोभग्य सु इति स्थिते अनुनासिकत्वेन पाणिनीयैः प्रतिज्ञातस्य सुप्रत्ययान्त्यस्य उकारस्य उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञायां तस्य लोपः इत्यनेन च तस्य इत्संज्ञकस्य उकारस्य लोपे वेशोभग्य स् इति जाते समुदायस्य सुबन्तत्वात् सुप्तिङन्तं पदम् इत्यनेन तस्य पदसंज्ञायां तदन्त्यस्य सकारस्य स्थाने ससजुषो रुः इत्यनेन रु- इत्यादेशे अनुबन्धलोपे च वेशोभग्य र् इति जाते समुदायस्य अन्त्यस्य रेफस्य स्थाने खरवसानयोर्विसर्जनीयः इत्यनेन विसर्गादिशे सर्ववर्णसम्मेलने **वेशोभग्यः** इति रूपं सिध्यति।

यशोभग- इति शब्दस्य समासान्तत्वात् कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञायां ततश्च यशोभगो विद्यते यस्य स इति विग्रहे प्रकृतसूत्रेण यल्-प्रत्यये यशोभग यल् इति स्थिते हलन्त्यम् इति सूत्रेण यल्- प्रत्ययान्त्यस्य लकारस्य इत्संज्ञायां तस्य लोपः इत्यनेन तस्य च इत्संज्ञकस्य लकारस्य लोपे यशोभग य इति स्थिते यचि भम् इत्यनेन यशोभग इत्यस्य भसंज्ञायां तदन्त्यस्य अकारस्य यस्येति च इत्यनेन लोपे यशोभग् य इति स्थिते संयोगे निष्पन्नस्य यशोभग्य इति शब्दस्वरूपस्य तद्धितान्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन तस्य प्रातिपदिकसंज्ञायां ततश्च ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सुप्रत्यये यशोभग्य सु इति स्थिते अनुनासिकत्वेन पाणिनीयैः प्रतिज्ञातस्य सुप्रत्ययान्त्यस्य उकारस्य उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञायां तस्य लोपः इत्यनेन च तस्य इत्संज्ञकस्य उकारस्य लोपे यशोभग्य स् इति जाते समुदायस्य सुबन्तत्वात् सुप्तिङन्तं पदम् इत्यनेन तस्य पदसंज्ञायां तदन्त्यस्य सकारस्य स्थाने ससजुषो रुः इत्यनेन रु- इत्यादेशे अनुबन्धलोपे च यशोभग्य र् इति जाते समुदायस्य अन्त्यस्य रेफस्य स्थाने खरवसानयोर्विसर्जनीयः इत्यनेन विसर्गादिशे सर्ववर्णसम्मेलने **यशोभग्यः** इति रूपं सिध्यति।



## १९.५) ख च॥ (४.४.१३२)

**सूत्रार्थः-** वेशोयशआदेः प्रातिपदिकात् मत्वर्थे ख-प्रत्ययः स्यात्।

**सूत्रावतरणम्-** वेशोभगो विद्यते यस्य स इति विग्रहे विद्यमानात् वेशोभगप्रातिपदिकात् खप्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। सूत्रेऽस्मिन् द्वे पदे स्तः। ख इति अव्ययपदम्। चेति अव्ययपदम्। वेशोयशआदेर्भगाद्यल् इति सम्पूर्णं सूत्रमत्रानुवर्तते। प्रातिपदिकात् प्रत्ययः परः चेति अधिकृतमस्ति। भवे छन्दसि इत्यस्मात् सूत्रात् छन्दसि इति पदमनुवर्तते। मत्वर्थे मासतन्वोः इति सूत्रात् मत्वर्थे इति पदमनुवर्तते। तद्धिताः इत्यनुवर्तते। सूत्रार्थो हि वेशोयशआदेः प्रातिपदिकात् भगात् तद्धितः ख-प्रत्ययः परः स्यात् छन्दसि इति।

**उदाहरणम्-** वेशोभगीनः, यशोभगीनः चेति।

**सूत्रार्थसमन्वयः-** वेशोभग- शब्दस्य समासान्तत्वात् कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञायां ततश्च वेशोभगो विद्यते यस्य स इति विग्रहे प्रकृतसूत्रेण ततः खप्रत्यये वेशोभग ख इति जाते आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् इति सूत्रेण खकारस्य स्थाने ईन्- इत्यादेशे वेशोभग ईन् अ इति जाते यचि भम् इति सूत्रेण वेशोभगशब्दस्य अन्त्यस्य अकारस्य भसंज्ञायां यस्येति च इति सूत्रेण तस्य लोपे वर्णसम्मेलनेन निष्पन्नस्य वेशोभगीन इति शब्दस्वरूपस्य तद्धितान्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन तस्य प्रातिपदिकसंज्ञायां ततश्च ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सुप्रत्यये वेशीभगीन सु इति स्थिते अनुनासिकत्वेन पाणिनीयैः प्रतिज्ञातस्य सुप्रत्ययान्त्यस्य उकारस्य उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञायां तस्य लोपः इत्यनेन च तस्य इत्संज्ञकस्य उकारस्य लोपे वेशोभगीन स् इति जाते समुदायस्य सुबन्तत्वात् सुप्तिङन्तं पदम् इत्यनेन तस्य पदसंज्ञायां तदन्त्यस्य सकारस्य स्थाने ससजुषो रुः इत्यनेन रु- इत्यादेशे अनुबन्धलोपे च वेशोभगीन र् इति जाते समुदायस्य अन्त्यस्य रेफस्य स्थाने खरवसानयोर्विसर्जनीयः इत्यनेन विसर्गादेशे सर्ववर्णसम्मेलने **वेशोभगीनः** इति रूपं सिध्यति।

एवं **यशोभगीनः** इत्यादौ अपि बोद्धव्यम्।

## १९.६) सोममर्हति यः॥ (४.४.१३७)

**सूत्रार्थः-** द्वितीयान्तात् समर्थात् सोमप्रातिपदिकात् अर्हति इत्यर्थे यः स्यात्।

**सूत्रावतरणम्-** सोमम् अर्हति इति विग्रहे सोमशब्दात् यप्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। सोमम् इति द्वितीयान्तं पदम्। अर्हति इति क्रियापदम्। यः इति प्रथमान्तं पदम्। भवे छन्दसि इत्यस्मात् सूत्रात् छन्दसि इति पदमनुवर्तते। प्रातिपदिकात् इति पञ्चम्यन्तं पदमत्र अनुवर्तते। प्रत्ययः परश्च चेति पदद्वयम् अत्र अधिकृतमस्ति। मत्वर्थे मासतन्वोः इति सूत्रात् मत्वर्थे इति पदमनुवर्तते। तद्धिताः इत्यनुवर्तते। एवञ्च अत्र



पदयोजना- छन्दसि सोममर्हति प्रातिपदिकात् यः तद्धितः प्रत्ययः परः इति। ततश्च सूत्रार्थो भवति सोमम् अर्हति इत्यर्थे द्वितीयान्तात् समर्थात् सोमप्रातिपदिकात् तद्धितसंज्ञकः यप्रत्ययः परो भवतीति।

**उदाहरणे सूत्रार्थसमन्वयः-** सोमशब्दस्य अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इत्यनेन प्रातिपदिकसंज्ञायां ततश्च सोममर्हति इति विग्रहे द्वितीयान्तात् सोमप्रातिपदिकात् अर्हति अर्थे प्रकृतसूत्रेण यप्रत्यये सोम य इति स्थिते यचि भम् इत्यनेन सोमशब्दस्य भसंज्ञायां यस्येति च इत्यनेन सोमशब्दस्य अन्त्यस्य अकारस्य लोपे संयोगे निष्पन्नस्य सोम्यप्रातिपदिकस्य तद्धितान्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन तस्य प्रातिपदिकसंज्ञायां ततश्च ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सुप्रत्यये सोम्य सु इति स्थिते अनुनासिकत्वेन पाणिनीयैः प्रतिज्ञातस्य सुप्रत्ययान्त्यस्य उकारस्य उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञायां तस्य लोपः इत्यनेन च तस्य इत्संज्ञकस्य उकारस्य लोपे सोम्य स् इति जाते समुदायस्य सुबन्तत्वात् सुप्तिङन्तं पदम् इत्यनेन तस्य पदसंज्ञायां तदन्त्यस्य सकारस्य स्थाने ससजुषो रुः इत्यनेन रु इत्यादेशे अनुबन्धलोपे च सोम्य र् इति जाते समुदायस्य अन्त्यस्य रेफस्य स्थाने खरवसानयोर्विसर्जनीयः इत्यनेन विसर्गादेशे सर्ववर्णसम्मेलने **सोम्यः** इति रूपं सिध्यति।

## १९.७) वसोः समूहे च॥ (४.४.१४०)

**सूत्रार्थः-** वसोः प्रातिपदिकात् समूहे मये च यत् स्यात्।

**सूत्रावतरणम्-** वसोः प्रतिपदिकात् समूहे अर्थे मये अर्थे च यत्-प्रत्ययविधानार्थं सूत्रमिदं प्रणीतमाचार्येण भगवता पाणिनिना।

**सूत्रव्याख्या-** त्रिपदात्मकमिदं विधिसूत्रम् अस्ति। सूत्रम्। वसोः इति पञ्चम्यन्तं पदम्। समूहे इति सप्तम्यन्तं पदम्। चेति अव्ययपदम्। चकारबलात् मयडर्थेऽपि यत्-प्रत्ययो भवति इत्यर्थो लभ्यते। प्रातिपदिकात् प्रत्ययः परः चेति अधिकृतमस्ति। मये च इत्यस्मात् सूत्रात् मये इत्यनुवर्तते। भवे छन्दसि इत्यस्मात् सूत्रात् छन्दसि इति पदमनुवर्तते। मत्वर्थे मासतन्वोः इति सूत्रात् मत्वर्थे इति पदमनुवर्तते। तद्धिताः इत्यनुवर्तते। ततश्च सूत्रार्थो भवति वसुप्रातिपदिकात् समूहे अर्थे मयडर्थे च तद्धितसंज्ञकः यत्-प्रत्ययो भवतीति।

**उदाहरणम्-** वसव्यः।

**सूत्रार्थसमन्वयः-** वसुशब्दः देवतावाची भवति धनवाची अपि भवति। देववाचकात् वसुशब्दात् समूहार्थस्य विवक्षायाम् अण्प्रत्यये प्राप्ते किञ्च धनवाचकात् वसुशब्दात् समूहार्थस्य विवक्षायाम् अचित्तहस्तिधेनोष्ठक् इति सूत्रेण ठक्प्रत्यये प्राप्ते प्रकृतसूत्रेण उभौ बाधित्वा यत्-प्रत्यये वसु यत् इति स्थिते अनुबन्धलोपे वसु य इति स्थिते ओर्गुणः इत्यनेन उकारस्य गुणे ओकारे वसो य इति स्थिते वान्तो यि प्रत्यये इत्यनेन ओकारस्य अवादेशे वसव् य इति स्थिते संयोगे निष्पन्नात् वसव्यप्रातिपदिकात् सुप्रत्यये विभक्तिकार्ये **वसव्यः** इति रूपम्।





## पाठगतप्रश्नाः-१

१. मत्वर्थे मासतन्त्वोः इत्यनेन कस्मिन् अर्थे यत्-प्रत्ययो विधीयते।
२. मधोर्ञ इति सूत्रेण कः प्रत्ययः भवति।
३. मधुशब्दस्य प्रातिपदिकसंज्ञाविधायकं सूत्रं किम्।
४. नभस्यः इत्यस्य कोऽर्थः।
५. नभस्य इति स्थिते प्रातिपदिकसंज्ञाविधायकं सूत्रं लिखत।
६. नभस्यः इत्यत्र सुप्प्रत्ययविधायकं सूत्रं लिखत।
७. मधुशब्दात् मत्वर्थे ञप्रत्ययविधायकं सूत्रं किम्।
८. ओजस्यमित्यस्य कोऽर्थः।
९. मत्वर्थे यल्प्रत्यविधायकं सूत्रं किम्।
१०. वेशोभगीनः इत्यत्र केन सूत्रेण कः प्रत्ययः।
११. सोममर्हति यः इत्यनेन कस्मात् यः प्रत्ययः विहितः।
१२. वसोः समूहे च इत्यस्मिन् सूत्रे चकारबलेन किं सिध्यति।

## १९.८) नक्षत्राद्घः॥ (४.४.१४१)

**सूत्रार्थः-** नक्षत्रात् प्रातिपदिकात् घः स्याच्छन्दसि स्वार्थे।

**सूत्रावतरणम्-** नक्षत्रात् प्रातिपदिकात् छन्दसि घ-प्रत्ययविधनाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम् पदद्वयात्मकम् अस्ति। नक्षत्रात् घः इति सूत्रगतपदच्छेदः। नक्षत्रात् इति पञ्चम्यन्तं पदम्। घः इति प्रथमान्तं पदम्। प्रातिपदिकात्, प्रत्ययः, परः इति अधिकृतम्। भवे छन्दसि इति सूत्रात् छन्दसि इति पदमनुवर्तते। नक्षत्रात् इत्यत्र पञ्चमीश्रवणात् तस्मादित्युत्तरस्य इति परिभाषया परस्य इत्यर्थः लभ्यते। अत्र कस्मिन् अर्थे घ-प्रत्ययः भवेत् इति निर्दिष्टं नास्ति। अतः अयं प्रत्ययः अनिर्दिष्टः अस्ति। तेन अनिर्दिष्टाः प्रत्ययाः स्वार्थे भवन्ति इति नियमेन घप्रत्ययः अत्र स्वार्थे विधीयते। अर्थात् घप्रत्ययः यस्मात् प्रातिपदिकात् विधीयते तस्य प्रातिपदिकस्य अर्थे एव स भवति। तद्धिताः इत्यनुवर्तते। अतः अस्य सूत्रस्य अर्थः भवति छन्दसि नक्षत्रप्रातिपदिकात् परः तद्धितसंज्ञकः घः प्रत्ययः स्वार्थे भवति इति।

**उदाहरणम्-** नक्षत्रियः।

**सूत्रार्थसमन्वयः** - नक्षत्रप्रातिपदिकात् प्रकृतसूत्रेण घ-प्रत्यये नक्षत्र घ इति स्थितिः भवति। ततः यथासंख्यमनुदेशः समानाम् इति परिभाषया परिष्कृतेन आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् इत्यनेन सूत्रेण घकारस्य स्थाने इय् इति आदेशे नक्षत्र इय् अ इति स्थिते यचि भम् इत्यनेन सूत्रेण नक्षत्रशब्दस्य भसंज्ञायां यस्येति च इत्यनेन सूत्रेण रकारोत्तराकारस्य लोपे संयोगे निष्पन्नस्य नक्षत्रिय-



शब्दस्वरूपस्य तद्धितान्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन तस्य प्रातिपदिकसंज्ञायां ततश्च ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सुप्रत्यये नक्षत्रिय सु इति स्थिते अनुनासिकत्वेन पाणिनीयैः प्रतिज्ञातस्य सुप्रत्ययान्त्यस्य उकारस्य उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञायां तस्य लोपः इत्यनेन च तस्य इत्संज्ञकस्य उकारस्य लोपे नक्षत्रिय स् इति जाते समुदायस्य सुबन्तत्वात् सुप्तिङन्तं पदम् इत्यनेन तस्य पदसंज्ञायां तदन्त्यस्य सकारस्य स्थाने ससजुषो रुः इत्यनेन रु- इत्यादेशे अनुबन्धलोपे च नक्षत्रिय र् इति जाते समुदायस्य अन्त्यस्य रेफस्य स्थाने खरवसानयोर्विसर्जनीयः इत्यनेन विसर्गादेशे सर्ववर्णसम्मेलने **नक्षत्रियः** इति रूपं सिध्यति।

## ११.९) सर्वदेवात्तातिल्॥ (४.४.१४२)

**सूत्रार्थः-** सर्वदेवप्रातिपदिकाभ्यां छन्दसि तातिल्-प्रत्ययः स्यात्।

**सूत्रावतरणम्-** सर्वप्रातिपदिकात् देवप्रातिपदिकात् च तातिल्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** अस्मिन् सूत्रे द्वे पदे स्तः। सर्वदेवात् तातिल् इति सूत्रगतपदच्छेदः। सर्वदेवात् इति पञ्चम्यन्तं पदम्। सर्वश्च देवश्च इति सर्वदेवम् तस्मात् सर्वदेवात् इति समाहारद्वन्द्वसमासः। तातिल् इति प्रथमान्तं पदम्। ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् इति पञ्चम्यन्तं पदम् अनुवर्तते। प्रत्ययः, परः इत्युभयम् अधिकृतम् अस्ति। तद्धिताः इत्यनुवर्तते। भवे छन्दसि इति सूत्रात् छन्दसि इति पदमनुवर्तते। अत्र कस्मिन् अर्थे तातिल्प्रत्ययः भवेत् इति निर्दिष्टं नास्ति। अतः अयं प्रत्ययः अनिर्दिष्टः अस्ति। तेन अनिर्दिष्टाः प्रत्ययाः स्वार्थे भवन्ति इति नियमेन तातिल्प्रत्ययः अत्र स्वार्थे विधीयते। ततश्च सूत्रार्थो भवति छन्दसि सर्वप्रातिपदिकात् देवप्रातिपदिकात् च तद्धितसंज्ञकः तातिल्-प्रत्ययः स्यात् स्वार्थे इति।

**उदाहरणम्-** सर्वतातिम्, देवतातिम्।

**सूत्रार्थसमन्वयः** -सर्वादिगणे पठितस्य सर्वादीनि सर्वनामानि इति सूत्रेण सर्वनामसंज्ञकस्य सर्व- शब्दस्य अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इति सूत्रेण प्रातिपदिकसंज्ञायां ततः प्रकृतसूत्रेण स्वार्थे तातिल्-प्रत्यये सर्व तातिल् इति स्थिते तातिल्-प्रत्ययान्त्यस्य लकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण च तस्य लकारस्य लोपे सर्व ताति इति स्थिते संयोगे निष्पन्नस्य सर्वताति शब्दस्वरूपस्य तद्धितान्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन तस्य प्रातिपदिकसंज्ञायां ततश्च ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु द्वितीयैकवचनविवक्षायाम् अमि सर्वताति अम् इति स्थिते इकारस्य अकारस्य च स्थाने अमि पूर्वः इत्यनेन पूर्वरूपैकादेशे इकारे सर्ववर्णसम्मेलने **सर्वतातिम्** इति रूपम् सिद्धम्।



एवं **देवतातिम्** इत्यत्रापि पूर्ववत् प्रक्रिया बोध्या।

## १९.१०) सप्तनोऽञ्छन्दसि॥ (४.१.६१)

**सूत्रार्थः**- सप्तनः प्रातिपदिकात् छन्दसि तदस्य परिमाणम् इत्यर्थे अञ् स्यात्।

**सूत्रावतरणम्**- छन्दसि सप्त परिमाणं वर्गः वा एषामिति विग्रहे सप्तनः प्रातिपदिकात् अञ्-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या**- विधिसूत्रमिदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। सप्तनः अञ् छन्दसि इति सूत्रगतपदच्छेदः। सप्तनः इति पञ्चम्यन्तं पदम्। अञ् इति प्रथमान्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्। पञ्चद्दशतौ वर्गे च इत्यस्मात् सूत्रात् वर्गे इति प्रथमान्तं पदमनुवर्तते। तदस्य परिमाणम् इति सम्पूर्णं सूत्रमत्रानुवर्तते। ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् इति पञ्चम्यन्तं पदम् अनुवर्तते। प्रत्ययः, परः इत्युभयम् अधिकृतम् अस्ति। तद्धिताः इत्यनुवर्तते। ततश्च सूत्रार्थो भवति छन्दसि सप्तन्-प्रातिपदिकात् तदस्य परिमाणम् इत्यर्थे वर्गेऽर्थे च तद्धितसंज्ञकः अञ्-प्रत्ययः स्यादिति।

**उदाहरणम्**- साप्तानि।

**सूत्रार्थसमन्वयः**- छन्दसि सप्त परिमाणं वर्गो वा एषामिति विग्रहे सप्तन् इति प्रातिपदिकात् प्रकृतसूत्रेण अञ्-प्रत्यये सप्तन् अञ् इति स्थिते ञकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायां तस्य लोपः इत्यनेन तल्लोपे च कृते सप्तन् अ इति स्थिते अचोऽन्त्यादि टि इत्यनेन सप्तनः अन्भागस्य टिसंज्ञायां नस्तद्धिते इत्यनेन च टेः अन्-इत्यस्य लोपे सप्त् अ इति स्थिते तद्धितेष्वचामादेः इत्यनेन सूत्रेण आदेः अचः अकारस्य वृद्धौ आकारे साप्त् अ इति स्थिते संयोगे निष्पन्नस्य साप्त् अ इति शब्दस्वरूपस्य तद्धितान्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां ततश्च ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमाबहुवचनविवक्षायां जसि साप्त जस् इति स्थिते जश्-शसोः शिः इत्यनेन सम्पूर्णस्य जस्- प्रत्ययस्य स्थाने शि- इति आदेशे शि-प्रत्ययादेः शकारस्य लशक्वतद्धिते इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण च तस्य शकारस्य लोपे साप्त इ इति स्थिते शि- इत्यस्य शि सर्वनामस्थानम् इत्यनेन सर्वनामस्थानसंज्ञायां नपुंसकस्य झलचः इत्यनेन सूत्रेण साप्त-शब्दस्य अन्त्यस्याकारस्य नुमागमे नुम्-इत्यस्य उकारस्य उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञयाम्, मकारस्य हलन्त्यम् इति सूत्रेण च इत्संज्ञायां तस्य लोपः इति सूत्रेण तयोः मकारोकारयोः लोपे साप्तन् इ इति स्थिते सर्वनामस्थाने चासम्बुद्धौ इत्यनेन नान्तस्य साप्तन्-शब्दस्य उपधायाः अकारस्य दीर्घे ततश्च सर्ववर्णसम्मेलने **साप्तानि** इति रूपं सिध्यति।

## १९.११) संपरिपूर्वात् ख च॥ (५.१.६२)

**सूत्रार्थः**- संपरिपूर्वात् वत्सरान्तात् प्रातिपदिकात् छन्दसि अधीष्टादिष्वर्थेषु खः स्यात् छश्च।

**सूत्रावतरणम्**- संवत्सरेण निर्वृत्तः संवत्सरं व्याप्य अधीष्टो भृतो भूतो भावी वा इति विग्रहे संवत्सरप्रातिपदिकात् ख-प्रत्ययविधानाय छ-प्रत्ययविधानाय च सूत्रमिदं प्रणीतम्।



**सूत्रव्याख्या-** विधिसूत्रमिदम्। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। संपरिपूर्वात् इति पञ्चम्यन्तं पदम्। ख इति प्रथमान्तं पदम्। च इत्यव्ययपदम्। वत्सरान्ताच्छश्छन्दसि इति सूत्रात् वत्सरात् इति पञ्चम्यन्तं छन्दसि इति सप्तम्यन्तं चानुवर्तते। तमधीष्टो भृतो भूतो भावी इति सम्पूर्णं सूत्रमत्रानुवर्तते। ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् इति पञ्चम्यन्तं पदम् अनुवर्तते। प्रत्ययः, परः इत्युभयम् अधिकृतम् अस्ति। सूत्रस्थचकारबलात् छ-प्रत्ययोऽपि अनेन विधीयते। ततश्च सूत्रार्थो भवति अधीष्टप्रभृत्यर्थेषु छन्दसि वत्सरान्तात् प्रातिपदिकात् खप्रत्ययो भवति छप्रत्ययश्च इति।

**उदाहरणम्-** संवत्सरीणः इति उदाहरणम्। संवत्सरेण निर्वृत्तः संवत्सरं व्याप्य अधीष्टो भृतो भूतो भावी वा इति विग्रहे प्रकृतसूत्रेण ख-प्रत्यये खस्य स्थाने ईन्-आदेशे संवत्सर ईन् अ इति स्थिते यचि भम् इत्यनेन भसंज्ञायां यस्येति च इत्यनेन अकारस्य लोपे संवत्सर् ईन् अ इति स्थिते नकारस्य अट्कुप्वाङ्नुम्व्यवायेऽपि इत्यनेन णकारे संयोगे निष्पन्नात् संवत्सरीणप्रातिपदिकात् सुविभक्तौ विभक्तिकार्ये **संवत्सरीणः** इति रूपम्।

## १९.१२) उपसर्गाच्छन्दसि धात्वर्थे॥ (५.१.११८)

**सूत्रार्थः-** धात्वर्थविशिष्टे साधने वर्तमानात्स्वार्थे वतिः स्यात्।

**सूत्रावतरणम्-** धात्वर्थक्रियाविशिष्टसाधने वर्तमानात् उपसर्गात् वति-प्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। त्रिपदात्मकमिदं सूत्रम्। उपसर्गात् छन्दसि धात्वर्थे इति सूत्रगतपदच्छेदः। उपसर्गात् इति पञ्चम्यन्तं पदम् अतः तस्मादित्युत्तरस्य इति परिभाषया उत्तरस्य इति पदं लभ्यते। छन्दसि इति सप्तम्यन्तं पदम् अत्र वैषयिकसप्तमी। धात्वर्थे इति सप्तम्यन्तं पदम्। धात्वर्थः क्रिया। तेन तुल्यं क्रिया चेद्वतिः इत्यस्मात् सूत्रात् वतिः इति पदमनुवर्तते। प्रातिपदिकात् प्रत्ययः परः चेति अधिकृतमस्ति। तद्धिताः इत्यनुवर्तते। ततश्च सूत्रार्थो भवति छन्दसि विषये धात्वर्थे क्रियायाः अर्थविशिष्टसाधने उपसर्गात् परं तद्धितसंज्ञकः वतिप्रत्ययः स्यात् इति। अयम् प्रत्ययः स्वार्थिकः, यतो हि अत्र कस्मिन् अर्थे विधीयते इति निर्दिष्टम् नास्ति। अतः स्वार्थे एव वतिप्रत्ययो भवति। ततश्च सूत्रार्थो भवति छन्दसि विषये धात्वर्थक्रियाविशिष्टसाधने उपसर्गात् परं तद्धितसंज्ञकः वतिप्रत्ययः स्यात् स्वार्थे इति।

**उदाहरणम्-** यद् उद्वतो निवतः इत्युदाहरणम्।

**सूत्रार्थसमन्वयः -** धात्वर्थक्रियाविशिष्टसाधने प्रकृतसूत्रेण वर्तमानात् उत्-उपसर्गात् वतिप्रत्यये अनुबन्धलोपे उद्वत् इति स्थिते प्रातिपदिकात् ङस्-प्रत्ययेऽनुबन्धलोपे उद्वत् अस् इति स्थिते सकारस्य ससजुषो रुः इति रुत्वेऽनुबन्धलोपे उद्वतर् इति स्थिते अस्य सुबन्तसमुदायस्य सुप्तिङन्तं पदम् इत्यनेन पदसंज्ञासत्त्वात् पदान्त्यस्य रेफस्य खरवसानयोर्विसर्जनीयः इति विसर्गे **उद्वतः** इति रूपं सिध्यति।





## पाठगतप्रश्नाः-२

१३. नक्षत्राद्धः इत्यस्मिन् सूत्रे नक्षत्रशब्दात् घः प्रत्ययः कस्मिन् अर्थे भवति।

१४. सर्वदेवात्तातिल् इत्यनेन तातिल्प्रत्ययः कस्मात् भवति।

१५. सप्तनोऽञ्छन्दसि इत्यनेन अञ्प्रत्ययः कस्मिन् अर्थे भवति।

१६. सप्तनोऽञ्छन्दसि इति सूत्रस्य पदच्छेदं दर्शयत।

१७. साप्तनि इत्यस्य विग्रहः कः।

१८. सम्पूर्वात् ख च इत्यस्मिन् सूत्रे चकारेण कस्य प्रत्ययस्य ग्रहणम्।

१९. उपसर्गाच्छन्दसि धात्वर्थे इत्यनेन कः प्रत्ययः।

२०. उपसर्गाच्छन्दसि धात्वर्थे इति सूत्रस्य पदच्छेदं दर्शयत।



## पाठसारः

अस्मिन् पाठे भवान् मत्वर्थे ये प्रत्ययाः भवन्ति तद्विषये ज्ञातवान् स्यात्। अत्र यत्-ञ-ख-यल्-घ-तातिल्-अञ्-वति इत्येतेषां प्रत्ययानां विषये आलोचना विद्यते। अत्र एतेषां प्रत्ययानां विधायकानि यानि सूत्राणि तान्यपि विशेषेण आलोचितानि। तत्तत्प्रत्ययैः यानि रूपाणि भवन्ति तेषां मध्ये प्रसिद्धानां प्रक्रिया अपि अत्र प्रदर्शिता अस्ति।



## पाठान्तप्रश्नाः

१. नभस्यः इति रूपं ससूत्रं साधयत।

२. माधवः इति रूपं ससूत्रं साधयत।

३. ओजसीनम् इति रूपं ससूत्रं साधयत।

४. वेशोभग्यः इति रूपं ससूत्रं साधयत।

५. यशोभगीनः इति रूपं ससूत्रं साधयत।

६. सोममर्हति यः इति सूत्रं व्याख्यात।

७. वसव्यः इति रूपं ससूत्रं साधयत।

८. नक्षत्राद्धः इति सूत्रं व्याख्यात।

९. साप्तानि इति रूपं ससूत्रं साधयत।



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तरकूटः-१**



### अष्टाध्याय्याः चतुर्थः अध्यायः

१. मत्वर्थे।
२. मत्वर्थे मासतन्वोः ञः यत् प्रत्ययश्च भवति।
३. कृत्तद्धितसमासाश्च इति मधुशब्दस्य प्रातिपदिकसंज्ञाविधायकं सूत्रम्।
४. नभस्य शब्दस्य मेघयुक्तमास इत्यर्थः।
५. स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति अत्र सुप्प्रत्ययविधायकं सूत्रम्।
६. कृत्तद्धितसमासाश्च इति नभस्य इत्यस्य प्रातिपदिकसंज्ञाविधायकं सूत्रम्।
७. मधोर्ञ च इति सूत्रेण।
८. दिनम् इत्यर्थः।
९. वेशोयशआदेर्भगाद्यल् इति सूत्रम्।
१०. ख च इत्यनेन सूत्रेण खप्रत्ययः।
११. द्वितीयान्तात् सोमशब्दात्।
१२. चकारबलात् मयडर्थेऽपि यत्-प्रत्ययः सिध्यति।

**उत्तरकूटः-२**

१३. स्वार्थे।
१४. सर्वप्रातिपदिकात् देवप्रातिपदिकात् च।
१५. परिमाणम् इत्यर्थे
१६. सप्तनोऽञ्छन्दसि इत्यस्य सप्तनः अञ् छन्दसि इति सूत्रगतपदच्छेदः
१७. साप्तनि इत्यस्य छन्दसि सप्त परिमाणं वर्ग वा एषामिति विग्रहः।
१८. छप्रत्ययस्य ग्रहणम्।
१९. वतिप्रत्ययः।
२०. उपसर्गात् छन्दसि धात्वर्थे इति सूत्रगतपदच्छेदः

## इति नवदशः पाठः



२०

# अष्टाध्याय्याः पञ्चषष्ठौ अध्यायौ

## प्रस्तावना

अस्मिन् पञ्चमे पाठे अष्टाध्याय्याः पञ्चमषष्ठाध्याययोः चितानि सूत्राणि व्याख्यास्यन्ते। पूर्वस्मिन् पाठे भवान् वैदिकव्याकरणे घ-तातिल्-वति इत्यादिप्रत्ययानां प्रयोगान् ज्ञातवान्। प्रस्तुतपाठे केषाञ्चन डट्, मट् इत्याद्यागमानां विवरणं करिष्यते। तज्ज्ञास्यते। छन्दसि बहुव्रीहिविषये नूतनाः नियमाः सूत्रव्याख्यानपुरस्सरम् प्रतिपादयिष्यन्ते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- बहुव्रीहिसम्बन्धिनियमान् ज्ञास्यति।
- खिद्-धातोः विकल्पेन एचः आकारविधानं ज्ञास्यति।
- दीर्घाज्जसि इचि च पूर्वसवर्णदीर्घस्य वैकल्पिकत्वं ज्ञास्यति।
- छन्दसि दन्तशब्दस्य बहुव्रीहौ दतृ-आदेशविधानम् अवगमिष्यति।
- स्य इत्यत्र कदा सलोपो भवति तज्ज्ञास्यति।

## २०.१) थट् च छन्दसि॥ (५.२.५०)

**सूत्रार्थः-** नान्तादसंख्यादेः परस्य डटस्थट् स्यात् मट् च।

**सूत्रावतरणम्-** छन्दसि संख्यावाचिप्रातिपदिकात् डटः थट्-मट् इत्येतौ आगमौ विधातुम् सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रेऽस्मिन् सूत्रे त्रीणि पदानि सन्ति। थट् इति प्रथमान्तं पदम्। च इत्यव्ययपदम्। छन्दसि इति सप्तम्यन्तं पदम्। तस्य पूरणे डट् इति सूत्रात् डट् इति पदमनुवर्तते। तच्च षष्ठ्यन्ततया विपरिणमते। नान्तादसंख्यादेर्मट् इति सम्पूर्णं सूत्रमनुवर्तते। संख्यायाः गुणस्य निमाने मयट् इति सूत्रात् संख्यायाः इति पदमत्रानुवर्तते। ततश्च सूत्रार्थो भवति असंख्यादेः नान्तात् संख्यावाचकात् प्रातिपदिकात् परस्य डटः थट्-मट् आगमौ भवतः।

**उदाहरणम्-** पञ्चमम् पञ्चथम् चेत्यादीन्युदाहरणानि।



**सूत्रार्थसमन्वयः-** लोके संख्यावाचिप्रातिपदिकात् विहितस्य डटः स्थाने नान्तादसंख्यादेर्मट् इत्यनेन मट्-आगमो विधीयते। छन्दसि तु प्रकृतसूत्रेण तु थट्-आगमः मट्-आगमश्च विधीयते। तथा च पञ्चन् शब्दात् डट्प्रत्यये पञ्चन् अ इति दशायाम् प्रकृतसूत्रेण डटः थट्-आगमे थट्- प्रत्ययान्त्यस्य टकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायां तस्य लोप इत्यनेन सूत्रेण च तस्य लोपे पञ्चन् थ् अ इति स्थिते न लोपः प्रातिपदिकान्तस्य इति सूत्रेण पञ्चन् शब्दस्य अन्त्यस्य नकारस्य लोपे पञ्च थ् अ इति स्थिते संयोगे निष्पन्नस्य पञ्चथ इति शब्दस्वरूपस्य तद्धितान्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन तस्य प्रातिपदिकसंज्ञायां ततश्च ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सुप्रत्यये पञ्चथ सु इति स्थिते पञ्चथ शब्दस्य क्लीबलिङ्गे प्रवर्तमानत्वात् अतोऽम् इति सूत्रेण सुप्रत्यस्य स्थाने अमादेशे पञ्चथ अम् इति जाते अम् इत्यस्य विभक्तिश्च इत्यनेन विभक्तिसंज्ञकत्वात् न विभक्तौ तुस्माः इति निषेधसूत्रस्य जागरूकत्वात् हलन्त्यम् इति सूत्रेण तस्य मकारस्य इत्संज्ञाभावे पञ्चथ अम् इति जाते अमि पूर्वः इत्यनेन पूर्वरूपे एकादेशे अकारे सर्ववर्णसम्मेलने च **पञ्चथम्** इति रूपं सिध्यति।

एवं च पञ्चन् अ इति दशायाम् प्रकृतसूत्रेण मट्-आगमे मट्- प्रत्ययान्त्यस्य टकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायां तस्य लोपः इत्यनेन सूत्रेण च तस्य लोपे पञ्चन् म् अ इति स्थिते न लोपः प्रातिपदिकान्तस्य इति सूत्रेण पञ्चन्-शब्दस्य अन्त्यस्य नकारस्य लोपे पञ्च म् अ इति स्थिते संयोगे निष्पन्नस्य पञ्चम इति शब्दस्वरूपस्य तद्धितान्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन तस्य प्रातिपदिकसंज्ञायां ततश्च ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सुप्रत्यये पञ्चम सु इति स्थिते पञ्चथ-शब्दस्य क्लीबलिङ्गे प्रवर्तमानत्वात् अतोऽम् इति सूत्रेण सुप्रत्ययस्य स्थाने अमादेशे पञ्चम अम् इति जाते अम् इत्यस्य विभक्तिश्च इत्यनेन विभक्तिसंज्ञकत्वात् न विभक्तौ तुस्माः इति निषेधसूत्रस्य जागरूकत्वात् हलन्त्यम् इति सूत्रेण तस्य मकारस्य इत्संज्ञाभावे पञ्चम अम् इति जाते अमि पूर्वः इत्यनेन पूर्वरूपे एकादेशे अकारे सर्ववर्णसम्मेलने च **पञ्चमम्** इति रूपं सिध्यति।

## २०.२) बहुलं छन्दसि॥ (५.२.१२२)

**सूत्रार्थः-** मत्वर्थे विनिः स्यात्।

**सूत्रावतरणम्-** अस्-माया-मेधा-स्रजो विनिः इति सूत्रपठितप्रातिपदिकभिन्नप्रातिपदिकेभ्यः बहुलं विनिप्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** द्विपदात्मकं विधिसूत्रमिदम्। बहुलमिति प्रथमान्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्। अस्-माया-मेधा-स्रजो विनिः इत्यस्मात् सूत्रात् विनिः इति प्रथमान्तं पदमनुवर्तते। तदस्यास्त्यस्मिन्निति सूत्रमत्रानुवर्तते। प्रातिपदिकात् प्रत्ययः परः चेति अधिकृतमस्ति। ततश्च सूत्रार्थो भवति छन्दसि तदस्यास्त्यस्मिन्निति अर्थे प्रातिपदिकात् बहुलं विनिः प्रत्ययः स्यात् इति।



**विशेषः-** अस्-माया-मेधा-स्रजो विनिः इत्यनेन सूत्रेण सूत्रोक्तेभ्यः अस्-प्रभृतिभ्यः शब्देभ्यः एव विनिप्रत्ययो विधीयते। तदतिरिक्तात् प्रातिपदिकात् न विधीयते। परन्तु अनेन सूत्रेण तदतिरिक्तात् प्रातिपदिकात् बहुलं विनिप्रत्ययो विधीयते। ननु किं नाम बहुलम् इति चेदुच्यते-

क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥इति॥

**कारिकार्थः** - सूत्रप्रोक्तस्य कार्यस्य कुत्रचित् प्राप्तिः नास्ति तथापि तत्र प्रवृत्तिः स्यात्। किञ्च कुत्रचित् प्राप्तिः अस्ति किन्तु प्रवृत्तिः न भवति। अपि च क्वचित् विकल्पेन प्रवृत्तिः भवति। किञ्च कुत्रचिदन्यदेव भवति इति।

**उदाहरणम्-** तेजस्वी इत्युदाहरणम्।

**सूत्रार्थसमन्वयः-** तेजस्-शब्दात् अस्-माया-मेधा-स्रजो विनिः इत्यनेन विनिप्रत्ययो न विधीयते। यतो हि नायं शब्दः सूत्रे पठितः। परन्तु अनेन सूत्रेण तेजस्विन्-शब्दात् विनिप्रत्ययः विधीयते। अत्र बहुलम्-शब्दस्य प्रथमार्थः ग्राह्यः। तेजस् विनि इति स्थिते विनि-प्रत्ययस्य अन्त्यस्य इकारस्य अनुनासिकत्वेन पाणिनीयैः प्रतिज्ञातस्य उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण च तस्य लोपे संयोगे निष्पन्नस्य तेजस्विन्-शब्दस्वरूपस्य तद्धितान्ततत्वात् कृत्तद्धितसमासाश्च इत्यनेन तस्य प्रातिपदिकसंज्ञायां ततश्च ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सुप्रत्यये सुप्रत्ययस्य उकारस्य च उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण तस्य लोपे तेजस्विन् स् इति स्थिते सर्वनामस्थाने चासम्बुद्धौ इति सूत्रेण इकारस्य दीर्घे ईकारे तेजस्वीन् स् इति जाते हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् इति सूत्रेण सकारस्य लोपे तेजस्वीन् इति जाते नलोपः प्रातिपदिकान्तस्य इत्यनेन नकारस्य लोपे **तेजस्वी** इति रूपम्।

## २०.३) अमु च छन्दसि॥ (५.४.१२)

**सूत्रार्थः-** किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे प्रातिपदिकात् अमुः प्रत्ययः स्यात्।

**सूत्रावतरणम्-** किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे अर्थे प्रातिपदिकात् अमुप्रत्ययविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** पदत्रयात्मकम् विधिसूत्रमिदम्। अमु इति लुप्तप्रथमान्तं पदम्। च इत्यव्ययपदम्। छन्दसि इति सप्तम्यन्तं पदम्। किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे इति सम्पूर्णं सूत्रम् अत्रानुवर्तते। प्रातिपदकात् प्रत्ययः चेति अधिकृतमस्ति। ततश्च सूत्रार्थो भवति छन्दसि किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे अर्थे अमुः प्रत्ययो भवतीति।

**उदाहरणम्-** प्रतरम् इत्युदाहरणम्। तत्र प्र-उपसर्गात् तरप्-प्रत्यये तरप्-प्रत्ययान्त्यस्य पकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायां तस्य लोपः इत्यनेन च तल्लोपे संयोगे निष्पन्नस्य प्रतरशब्दस्य तद्धितान्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन सूत्रेण प्रातिपदिकसंज्ञायां ततः प्रकर्षे अर्थे छन्दसि



प्रकृतसूत्रेण अमुप्रत्यये अनुनासिकत्वेन पाणिनीयैः प्रतिज्ञातस्य अमुप्रत्ययस्य उकारस्य इत्संज्ञायां तस्य लोपः इति सूत्रेण च तस्य इत्संज्ञकस्य उकारस्य लोपे प्रतर अम् इति स्थिते यचि भम् इत्यनेन प्रतर इत्यस्य भसंज्ञायां यस्येति च इति सूत्रेण च रेफोत्तराकारस्य लोपे संयोगे **प्रतरम्** इति रूपम्। लोके तु **प्रतराम्।**

## २०.४) बहुप्रजाश्छन्दसि च॥ (५.४.१२३)

**सूत्रार्थः-** छन्दसि बहुव्रीहौ बहुप्रजाः असिच्-प्रत्ययान्तः निपात्यते।

**सूत्रावतरणम्-** वेदे बहुप्रजाः इति असिच्-प्रत्ययान्तपदस्य निपातनार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रेऽस्मिन् सूत्रे त्रीणि पदानि सन्ति। बहुप्रजाः इति प्रथमान्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्। च इति अव्ययपदम्। नित्यमसिच्प्रजा-मेधयोः इत्यस्मात् सूत्रात् असिच् इति अनुवर्तते। बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् इत्यस्मात् सूत्रात् बहुव्रीहौ इति पदमनुवर्तते। प्रातिपदिकात् प्रत्ययः परः चेति अधिकृतमस्ति। निपात्यते इति आक्षेपात् लभ्यते। निपातनं नाम किमिति चेत् सिद्धप्रक्रियस्य निर्देशो हि निपातः। ततश्च सूत्रार्थो भवति छन्दसि बहुव्रीहौ बहुप्रजाः इति शब्दः असिच्-प्रत्ययान्तः समासान्तः च निपात्यते इति।

**उदाहरणम्-** अस्य असिच्-प्रत्ययान्तस्य निपातितस्य बहुप्रजा-शब्दस्य प्रयोगः वेदे उपलभ्यते। तथा च अस्य प्रयोगः **बहुप्रजाः** निर्ऋतिमाविवेश्च इति। लोके तु **बहुप्रजः**।

## २०.५) छन्दसि च॥ (५.४.१४२)

**सूत्रार्थः-** दन्तस्य दतृशब्दः स्याद् बहुव्रीहौ।

**सूत्रावतरणम्-** छन्दसि दन्तशब्दस्य बहुव्रीहौ दतृ-आदेशविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रेऽस्मिन् सूत्रे द्वे पदे स्तः। छन्दसि इति सप्तम्यन्तं पदम्। च इत्यव्ययपदम्। वयसि दन्तस्य दतृ इति सूत्रात् दन्तस्य दतृ चेति पदद्वयमत्रानुवर्तते। बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् इत्यस्मात् सूत्रात् बहुव्रीहौ इति पदमनुवर्तते। प्रातिपदिकात् प्रत्ययः परः चेति अधिकृतमस्ति। ततश्च सूत्रार्थो भवति छन्दसि बहुव्रीहौ दन्तस्य दतृ आदेशः स्यादिति।

**उदाहरणम्-** उभयतोदतः।

**सूत्रार्थसमन्वयः-** उभयतः दन्ताः येषामिति विग्रहे बहुव्रीहिसमासे उभयतस् दन्त इति स्थिते प्रकृतसूत्रेण अनेकाल्शित्सर्वस्य इति परिभाषया परिष्कृतेन दन्त इत्यस्य दतृ इत्यादेशे उभयतस् दत् इति स्थिते सकारस्य रुत्वे उकारे उभयत उ दत् इति स्थिते संयोगे निष्पन्नात् उभयतोदत्-प्रातिपदिकात् सौ विभक्तिकार्ये उभयतोदतः इति रूपम्।

## २०.६) ऋतश्छन्दसि॥ (५.४.१५८)

**सूत्रार्थः-** ऋदन्तात् बहुव्रीहेर्न कप्।

**सूत्रावतरणम्-** छन्दसि बहुव्रीहौ ऋदन्तात् प्रातिपदिकात् कप्-प्रत्ययनिषेधार्थं सूत्रमिदं प्रणीतम्।



**सूत्रव्याख्या-** विधिसूत्रेऽस्मिन् द्वे पदे स्तः। ऋतः छन्दसि इति सूत्रगतपदच्छेदः। ऋतः इति पञ्चम्यन्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्। न संज्ञायाम् इत्यस्मात् सूत्रात् न इति पदमत्रानुवर्तते। उरः प्रभृतिभ्यः कप् इति सूत्रात् कप् इत्यनुवर्तते। बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् इत्यस्मात् सूत्रात् बहुव्रीहौ इति पदमनुवर्तते। प्रातिपदिकात् प्रत्ययः परः चेति अधिकृतमस्ति। अत्र ऋतः प्रातिपदकात् चेति द्वयं समानविभक्तिकं पदम्। ऋतः इति विशेषणम्। प्रातिपदिकात् इति विशेष्यम्। अतः येन विधिस्तदन्तस्य इत्यनेन तदन्तविधौ ऋदन्तात् प्रातिपदिकात् इत्यर्थो लभ्यते। ततश्च सूत्रार्थो भवति छन्दसि बहुव्रीहौ ऋदन्तात् प्रातिपदिकात् कप्-प्रत्ययो न भवतीति।

**उदाहरणम्-** उभयतोदतः प्रतिगृह्णाति।

**सूत्रार्थसमन्वयः** - उभयतः दन्ताः सन्ति अस्य इति विग्रहे बहुव्रीहिसमासे कृते उत्तरपदस्य दन्तशब्दस्य दतृ इत्यस्मिन् आदेशे प्रकियाकार्ये उभयतोदतः इति रूपं सिद्ध्यति।

## २०.७) तुजादीनां दीर्घोऽभ्यासस्य॥ (६.१.७)

**सूत्रार्थः-** तुजादीनाम् अभ्यासस्य दीर्घः स्यात्।

**सूत्रावतरणम्-** तुज्-प्रभृतिधातूनाम् अभ्यासस्य दीर्घविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रेऽस्मिन् त्रीणि पदानि सन्ति। तुजादीनाम् दीर्घः अभ्यासस्य इति सूत्रगतपदच्छेदः। तुजादीनाम् इति षष्ठ्यन्तं पदम्। दीर्घः इति प्रथमान्तं पदम्। अभ्यासस्य इति षष्ठ्यन्तं पदम्। अभ्यासः इति एका संज्ञा। द्विरुक्तस्य पूर्वस्य पूर्वोऽभ्यासः इत्यनेन अभ्याससंज्ञा विधीयते। धातोः इति पदमनुवर्तते। तच्च षष्ठीबहुवचनान्ततया विपरिणमते। ततश्च सूत्रार्थो भवति तुजादीनां धातूनाम् अभ्यासस्य दीर्घः स्यादिति।

**उदाहरणम्-** तुज्-धातोः लिट्-लकारे कानच्-प्रत्यये अनुबन्धलोपे तुज् आन इति स्थिते द्वित्वे तुज् तुज् आन इति स्थिते पूर्वोऽभ्यासः इति सूत्रेण द्विरुक्तस्य पूर्वस्य तुज्-इत्यस्य अभ्याससंज्ञायां हलादिः शेषः इत्यनेन सूत्रेण अभ्यासस्य आदेः हलः शेषे तु तुज् आन इति स्थिते प्रकृतसूत्रेण अभ्यास्य उकारस्य ह्रस्वस्य दीर्घे तू तुज् आन इति स्थिते संयागे निष्पन्नस्य तूतुजान इति शब्दस्वरूपस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन तस्य प्रातिपदिकसंज्ञायां ततश्च ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सुप्रत्यये सुप्रत्ययस्य उकारस्य उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण तस्य लोपे तूतुजान स् इति जाते समुदायस्य सुबन्तत्वात् सुप्तिङन्तं पदम् इत्यनेन तस्य पदसंज्ञायां तदन्त्यस्य सकारस्य स्थाने ससजुषो रुः इत्यनेन रु इत्यादेशे अनुबन्धलोपे च तूतुजान र् इति जाते रेफात् परस्य वर्णाभावस्य विरामोऽवसानम् इति सूत्रेण अवसानसंज्ञायां अवसानपरकत्वाच्च् समुदायस्य अन्त्यस्य रेफस्य स्थाने खरवसानयोर्विसर्जनीयः इत्यनेन विसर्गादेशे सर्ववर्णसम्मेलने तूतुजानः इति रूपं सिध्यति।



## २०.८) बहुलं छन्दसि॥ (६.१.३४)

**सूत्रार्थः-** ह्वः सम्प्रसारणं स्यात्।

**सूत्रावतरणम्-** छन्दसि ह्वः बहुलं सम्प्रसारणविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** द्विपदात्मकं विधिसूत्रमिदम्। बहुलमिति प्रथमान्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्। ह्वः सम्प्रसारणम् इति सम्पूर्णं सूत्रमत्रानुवर्तते। ततश्च सूत्रार्थो भवति छन्दसि ह्वेञ् स्पर्धायाम् इति धातोः बहुलं सम्प्रसारणं स्यात् इति।

**विशेषः-** ननु किं नाम बहुलम् इति चेदुच्यते-

क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।

विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति।। इति।

कारिकार्थः पूर्वोक्तः एव।

**उदाहरणे सूत्रार्थसमन्वयः-** आङ्पूर्वकात् ह्वेधातोः लट्-लकारे लस्य स्थाने लस्य इति सूत्रमधिकृत्य प्रवर्तमानेन तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् इति सूत्रेण खले कपोतन्यायेन अष्टादशसु तिबादिप्रत्ययेषु प्राप्तेषु उत्तमपुरुषैकवचनविवक्षायाम् इडागमे अनुबन्धलोपे आ ह्वे इ इति जाते इकारस्य अचोऽन्त्यादि टि इति सूत्रेण टिसंज्ञायां टित आत्मनेपदानां टेरे इत्यनेन टिसंज्ञकस्य इकारस्य एत्वे एकारे आ ह्वे ए इति स्थिते कर्तरि शप् इति सूत्रेण धातोः शप्प्रत्यये बहुलं छन्दसि (२.४.७३) इत्यनेन च शपः लुकि प्रकृतसूत्रेण बहुलम् सम्प्रसारणे वकारस्य उकारे आ ह् उ ए ए इति स्थिते उकारस्य प्रथम-एकारस्य च स्थाने संप्रसारणाच्च इति सूत्रेण पूर्वरूपैकादेशे उकारे आ ह् उ ए इति जाते अचि श्नुधातुभ्रुवां य्वोरियङुवङौ इत्यनेन उकारस्य स्थाने उवङादेशे हलन्त्यम् इति सूत्रेण उवङ्-प्रत्ययान्त्यस्य ङकारस्य इत्संज्ञायां तस्य लोपः इत्यनेन च इत्संज्ञकस्य ङकारस्य लोपे वर्णसम्मेलने आहुवे इति रूपं सिध्यति।

बहुलम् छन्दसि (६.१.३४) इति पूर्वोक्तसूत्रेण बहुलम् सम्प्रसारणम् विधीयते। तस्मात् बहुलग्रहणात् क्वचित् सम्प्रसारणम् न भवति। यथा ह्वयामि मरुतः शिवान्, ह्वयामि विश्वान् देवान् इत्यादौ सम्प्रसारणाभावः।

## २०.९) खिदेश्छन्दसि॥ (६.१.५२)

**सूत्रार्थः-** छन्दसि खिदेः विभाषा एचः आत्।

**सूत्रावतरणम्-** खिद्-धातोः विकल्पेन एचः आकारविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** द्विपदात्मकमिदं विधिसूत्रम्। खिदेः छन्दसि इति सूत्रगतपदच्छेदः। खिदेः इति षष्ठ्यन्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्। विभाषा लीयतेः इति सूत्रात् विभाषा इति पदमनुवर्तते। आदेच उपदेशेऽशिति इति सूत्रात् आत् एचः इति पदद्वयमनुवर्तते। ततश्च सूत्रार्थो भवति छन्दसि खिदेः एचः विभाषा आत् स्यात् इति।

**उदाहरणम्-** खिद्-धातोः लिट्-लकारे लस्य स्थाने तिपि तिपः स्थाने णलादेशे अनुबन्धलोपे खिद् अ इति स्थिते खिद् इत्यस्य द्वित्वे खिद् खिद् अ इति स्थिते द्विरुक्तस्य पूर्वभागस्य पूर्वोऽभ्यासः



इत्यनेन अभ्याससंज्ञायां हलादिः शेषः इत्यनेन अभ्यासादिहल्शेषे खि खिद् अ इति स्थिते अभ्यासे चर्च इत्यनेन खकारस्य चकारे चि खिद् अ इति स्थिते खकारोत्तरस्य इकारस्य गुणे एकारे चि खेद् अ इति स्थिते प्रकृतसूत्रेण खेद् इत्यस्य एचः एकारस्य आकारे सर्ववर्णसम्मेलने **चिखाद** इति रूपम्। लोके तु **चिखिदे** इति रूपम्।

## २०.१०) शीर्षंश्छन्दसि॥ (६.१.६०)

**सूत्रार्थः-** शिरस् शब्दस्य शीर्षन् स्यात्।

**सूत्रावतरणम्-** शिरस् शब्दस्य शीर्षन् इति निपातनविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रेऽस्मिन् द्वे पदे स्तः। शीर्षन् इति प्रथमान्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्। निपात्यते इति आक्षेपात् लभ्यते। सिद्धप्रक्रियस्य निर्देशो हि निपातः। एवञ्च शीर्षन् इति छन्दसि निपात्यते इति। ननु कस्य इति चेदुच्यते शिरःशब्दस्य। ततश्च सूत्रार्थो भवति शिरस् शब्दस्य शीर्षन् इति छन्दसि निपात्यते इति।

**उदाहरणम्-** अस्य शब्दस्य च वेदे प्रयोगः यथा शीर्ष्णः शीर्ष्णो जगतः इति।

## २०.११) वा छन्दसि॥ (६.१.१०६)

**सूत्रार्थः-** दीर्घाज्जसि इचि च पूर्वसवर्णदीर्घो वा स्यात्।

**सूत्रावतरणम्-** छन्दसि दीर्घात् पूर्वसवर्णस्य जसि इचि च परे दीर्घविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** द्विपदात्मकमिदं विधिसूत्रम्। वा इति अव्ययपदम्। छन्दसि इति सप्तम्यन्तं पदम्। नादिचि इति सूत्रात् इचि इति पदमनुवर्तते। दीर्घाज्जसि च इति सम्पूर्णं सूत्रमत्रानुवर्तते। प्रथमयोः पूर्वसवर्णः इति सूत्रात् पूर्वसवर्णः इति पदमत्रानुवर्तते। ततश्च सूत्रार्थो भवति छन्दसि दीर्घात् पूर्वसवर्णदीर्घो वा स्यात् जसि इचि च इति।

**उदाहरणम्-** वाराह्यौ इत्युदाहरणम्। वाराहीशब्दात् प्रथमायाः द्वितीयायाः द्विवचने औप्रत्यये वाराही औ इति स्थिते दीर्घात् ईकारात् परम् इच्प्रत्याहारस्थः औकारः अस्ति अतः प्रकृतसूत्रेण पूर्वसवर्णदीर्घे **वाराही** इति रूपम् भवति। पूर्वसवर्णाभावे वाराही औ इति स्थिते इको यणचि इत्यनेन ईकारस्य स्थाने यकारे सर्ववर्णसम्मेलने **वाराह्यौ** इति रूपम्। लोके तु पूर्वसवर्णनिषेधः तेन वाराह्यौ इत्येव रूपम्।

## २०.१२) शेश्छन्दसि बहुलम्॥ (६.१.७०)

**सूत्रार्थः-** छन्दसि शेः बहलं लोपः स्यात्।

**सूत्रावतरणम्-** छन्दसि शेः बाहुल्येन लोपविधानाय सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** त्रिपदात्मकं विधिसूत्रमिदम्। शेः छन्दसि बहुलम् इति सूत्रगतपदच्छेदः। शेः इति षष्ठ्यन्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्। बहुलमिति अव्ययपदम्। लोपो व्योर्वलि इत्यस्मात् सूत्रात्

लोपः इति पदमनुवर्तते। भवति इति पदमध्याह्रियते। ततश्च सूत्रार्थो भवति छन्दसि शेः बहुलं लोपः स्यात् इति। बहुलशब्दार्थः पूर्वोक्त एव।

**उदाहरणम्-** यत्-शब्दस्य क्लीवलिङ्गे जस्-प्रत्यये यत् जस् इति स्थिते जश्शसोः शिः इत्यनेन जसः स्थाने शि-प्रत्ययादेशे यत् शि इति स्थिते प्रकृतसूत्रेण बाहुल्येन शेः लोपे त्यदादीनामः इत्यनेन तकारस्य स्थाने अकारे य अ इति स्थिते अतो गुणे इत्यनेन पररूपैकादेशे य इति स्थिते नपुंसकस्य झलचः इत्यनेन नुमागमे अनुबन्धलोपे यन् इति स्थिते सर्वनामस्थाने चासम्बुद्धौ इत्यनेन उपधादीर्घे नकारस्य लोपे **या** इति रूपम् सिध्यति। लोके तु **यानि** इति रूपम्।



## पाठगतप्रश्नाः-१

१. नान्तादसंख्यादेः परस्य डटः के आगमा भवन्ति।।
२. मत्वर्थे विनिः केन भवति।
३. बहुप्रजाः इत्यस्य निपातविधानार्थं सूत्रं किम्।
४. छन्दसि च इति सूत्रेण किं भवति।
५. ऋतश्छन्दसि इति सूत्रेण किं भवति।
६. छन्दसि खिदेः एचः आत्-आदेशो वैकल्पिको न वा।
७. शिरस्-शब्दस्य शीर्षन् इति केन निपात्यते।

---

## २०.१३) अङ्ग इत्यादौ च॥ (६.१.११९)

**सूत्रार्थः** - अङ्गशब्दे यः एङ् तदादौ च अकारे यः एङ् पूर्वः सोऽति प्रकृत्या यजुषि।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण प्रकृतिवद्भावो विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। अङ्ग इति सप्तम्यन्तं पदम् (अत्र लोपः शाकल्यस्य इति सूत्रेण यकारलोपः)। च इति अव्ययपदम्। एङः पदान्तादति इति सूत्रात् एङः इति अति चेति पदद्वयमनुवर्तते। प्रकृत्यान्तः पादमव्यपरे इति सूत्रात् प्रकृत्या इति अनुवर्तते। यजुष्युरः इति सूत्रात् यजुषि इत्यनुवर्तते। संहितायामित्यधिकारः। ततश्च सूत्रार्थो भवति यजुषि विषये अङ्गशब्दस्य य एङ् सः अति परे प्रकृत्या स्यात् संहितायाम् इति।

**उदाहरणम्** - प्राणो अङ्गे अङ्गे अदीव्यत् इत्युदाहरणम्।

**सूत्रार्थसमन्वयः** - प्राणो अङ्गे अङ्गे अदीव्यत् इत्युदाहरणे प्राणो अङ्गे इत्यत्र अङ्गे इति एङः परमस्ति अतः प्रकृतसूत्रेण प्रकृतिवद्भावो भवति। अङ्गे अङ्गे इत्यत्र अङ्गे-पदात् परं यदि अकारः तिष्ठति तर्हि अङ्गे इत्यस्य एङः: प्रकृतिवद्भावो भवति इत्यर्थेन प्रकृतिवद्भावो भवति।

## २०.१४) अवपथासि च॥ (६.१.१२१)

**सूत्रार्थः** - अनुदात्ते अकारादौ अवपथाःशब्दे परे यजुषि एङ् प्रकृत्या।



**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण प्रकृतिवद्भावो विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। अवपथासि इति सप्तम्यन्तं पदम्। च इति अव्ययपदम्। एङः पदान्तादति इति सूत्रात् एङः, अति चेति पदद्वयमनुवर्तते। प्रकृत्यान्तः पादमव्यपरे इति सूत्रात् प्रकृत्या इति अनुवर्तते। यजुष्युरः इति सूत्रात् यजुषि इत्यनुवर्तते। अनुदात्ते च कुधपरे इति सूत्रात् अनुदात्ते इति पदमनुवर्तते। ततश्च सूत्रार्थो भवति अनुदात्ते अति च अवपथास्-शब्दे परतः एङ् प्रकृत्या भवति यजुषि इति।

**उदाहरणम्** - त्रीरुद्रेभ्यो अवपथाः।

**सूत्रार्थसमन्वयः** - पूर्वोक्ते उदाहरणे त्रीरुद्रेभ्यो इत्यत्र यकारोत्तरवर्तिनः ओकारस्य प्रकृतिवद्भावः। यतो हि अवपथाः (वप्धातोः लङि मध्यमपुरुषैकवचनान्तम् रूपम्) इत्यत्र वकारात् पूर्ववर्तिनः अकारः अनुदात्तः। किञ्च ह्रस्वः अकारोऽपि वर्तते।

## २०.१५) स्यश्छन्दसि बहुलम्॥ (६.१.१३३)

**सूत्रार्थः** - स्य इत्यस्य सोर्लोपः स्याद्धलि।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण सुलोपो विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। स्यः छन्दसि बहुलम् इति सूत्रगतपदच्छेदः। स्यः इति लुप्तषष्ठ्यन्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्। बहुलमिति प्रथमान्तं पदम्। एतत्तदोः सुलोपोऽकोरनञ्समासे हलि इति सूत्रात् हलि इति सुलोपः चेति पदद्वयमनुवर्तते। ततश्च सूत्रार्थो भवति स्य-इत्यस्य सुलोपः स्यात् हलि इति।

**उदाहरणम्** - एष स्य भानुः इत्युदाहरणम्।

**सूत्रार्थसमन्वयः** - स्य भानुः इत्यत्र त्यद्-शब्दात् सुविभक्तौ त्यदादीनामः इत्यनेन दकारस्य स्थाने अकारादेशे त्य अ स् इति जाते पररूपैकादेशे त्य स् इति स्थिते तदोः सः सावनन्त्ययोः इति सूत्रेण तकारस्य सकारे स्य स् इति स्थिते हलि भकारे परतः प्रकृतसूत्रेण सोः सकारस्य लोपे स्य भानुः इति रूपम्। एवम् अग्रेऽपि बोध्यम्।

## २०.१६) ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे॥ (६.१.१५१)

**सूत्रार्थः** - ह्यस्वात्परस्य चन्द्रशब्दस्योत्तरपदस्य सुडागमः स्यान्मन्त्रे।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण सुडागमो विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। ह्रस्वात् चन्द्रोत्तरपदे मन्त्रे इति सूत्रगतपदच्छेदः। ह्रस्वात् इति पञ्चम्यन्तं पदम्। चन्द्रोत्तरपदे इति सप्तम्यन्तं पदम्। चन्द्र उत्तरपदं यस्य तत् चन्द्रोत्तरपदम् तस्मिन् चन्द्रोत्तरपदे इति बहुव्रीहिसमासः। मन्त्रे इति सप्तम्यन्तं पदम्। सुट्-कात् पूर्वः इति सूत्रात् सुट् इति पदमनुवर्तते। ततश्च सूत्रार्थो भवति ह्रस्वात् परस्य चन्द्रशब्दोत्तरपदस्य सुडागमः स्यात् मन्त्रे इति।

**उदाहरणम्** - हरिश्चन्द्रः इत्युदाहरणम्।

**सूत्रार्थसमन्वयः** - हरिश्चन्द्रो यस्मिन् इति विग्रहे प्रक्रियया हरि चन्द्र इति स्थिते प्रकृतसूत्रेण ह्रस्वात् परस्य चन्द्रोत्तरपदस्य सुडागमे सुटः टित्त्वात् आद्यन्तौ टकितौ इति परिभाषया परिष्कृतेन हरि

सुट् चन्द्र इति स्थिते स्तोः श्चुना श्चुः इत्यनेन सकारस्य शकारे संयोगे निष्पन्नात् हरिश्चन्द्रप्रातिपदिकात् सौ विभक्तिकार्ये हरिश्चन्द्रः इति रूपम्।

## २०.१७) पितरामातरा च छन्दसि॥ (६.३.३३)

**सूत्रार्थः** - द्वन्द्वे निपातः।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् त्रीणि पदानि सन्ति। पितरामातरा इति प्रथमान्तं पदम्। च इति अव्ययपदम्। छन्दसि इति सप्तम्यन्तं पदम्। देवताद्वन्द्वे च इति सूत्रात् द्वन्द्वे इति पदमनुवर्तते। निपात्यते इत्याक्षिप्यते। ततश्च सूत्रार्थो भवति छन्दसि द्वन्द्वे पितरामातरा निपात्यते इति।

**उदाहरणम्** - आ मा गन्तां पितरामातरा च इति।

**सूत्रार्थसमन्वयः** - पिता च माता च इति विग्रहे प्रक्रियया पितृ मातृ इति स्थिते प्रकृतसूत्रेण **पितरामातरा**शब्दः निपात्यते। लोके **पितरौ, मातापितरौ** चेति रूपद्वयं भवति।

## २०.१८) सध मादस्थयोश्छन्दसि॥ (६.३.९६)

**सूत्रार्थः** - सहस्य सध-आदेशः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् त्रीणि पदानि सन्ति। सध इति अविभक्तिकं पदम्। मादस्थयोः इति सप्तम्यन्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्। सहस्य सध्रि इति सूत्रात् सहस्य इति पदमनुवर्तते। ततश्च सूत्रार्थो भवति सहस्य सध इत्यादेशः स्यात् मादस्थयोः परयोः छन्दसि इति।

**उदाहरणम्** - सधस्थम् इत्युदाहरणम्।

**सूत्रार्थसमन्वयः** - सह तिष्ठति इति विग्रहे सह स्था इति स्थिते आतोऽनुपसर्गे कः इति सूत्रेण कप्रत्यये सह स्था क इति स्थिते अनुबन्धलोपे सह स्था अ इति स्थिते कप्रत्ययस्य कित्त्वात् आतो लोप इटि च इति सूत्रेण स्था इत्यस्य आकारस्य लोपे सह स्थ् अ इति जाते प्रकृतसूत्रेण सहस्य सधादेशे सध स्थ् अ इति जाते संयोगे निष्पन्नात् सधस्थ-प्रातिपदिकात् सौ विभक्तिकार्ये **सधस्थः** इति रूपम्। अम्-विभक्तौ **सधस्थम्** इति रूपम् सिध्यति।

## २०.१९) छन्दसि च॥ (६.३.१२६)

**सूत्रार्थः** - अष्टन आत्वं स्यादुत्तरपदे।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् द्वे पदे स्तः। छन्दसि इति सप्तम्यन्तं पदम्। च इति अव्ययपदम्। अष्टनः संज्ञायाम् इति सूत्रात् अष्टनः इति पदमनुवर्तते। ढ्रलोपे पूर्वस्य दीर्घोऽणः इति सूत्रात् दीर्घः इति पदमनुवर्तते। ततः अचश्च इति परिभाषया अचः इति षष्ठ्यन्तम् पदम् लभ्यते। ततश्च सूत्रार्थो भवति छन्दसि अष्टनः अचः दीर्घः (आत्वमेव स्यात् उत्तरपदे)। अचः आद्यस्य अन्त्यस्य वा कस्य स्थाने दीर्घः इति पृच्छायाम् उच्यते अलोऽन्त्यस्य इति परिभाषया अन्त्यस्यैव अलः स्थाने इत्यर्थलाभात् अष्टनः अन्त्यस्यैव अचः स्थाने दीर्घो भवति उत्तरपदे परतः वेदविषये इति सम्पूर्णार्थः लभ्यते।

**उदाहरणम्** - अष्टापदी इत्युदारहणम्।



**सूत्रार्थसमन्वयः** - अष्टौ पादाः यस्याः इति विग्रहे प्रक्रियया अष्टन् पाद इति स्थिते नलोपः प्रातिपदिकस्य इति सूत्रेण नकारस्य लोपे अष्ट पाद इति जाते प्रकृतसूत्रेण पाद इति उत्तरपदे परतः अष्टनः टकारोत्तरवर्तिनः अकारस्य दीर्घे आत्त्वे अष्टापाद इति जाते अलोऽन्त्यस्य इति परिभाषया परिष्कृतेन संख्या सुपूर्वस्य इत्यनेन दकारोत्तराकारलोपे स्त्रीत्वविवक्षायां पादोऽन्यतरस्याम् इत्यनेन विकल्पेन ङीप्-प्रत्यये अष्टापादी इति स्थिते सौ विभक्तिकार्ये अष्टापादी इति रूपम्।

## २०.२०) मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ॥ (६.३.१३१)

**सूत्रार्थः** - मन्त्रे सोम-अश्व-इन्द्रिय-विश्वदेव्य इत्येतेषाम् दीर्घः स्यात् मतुप्-प्रत्यये परे।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण दीर्घः विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। मन्त्रे इति सप्तम्यन्तं पदम्। सोमाश्वेन्द्रियविश्वदेव्यस्य इति षष्ठ्यन्तं पदम्। मतौ इति सप्तम्यन्तं पदम्। मतौ इत्यस्य मतुप्-प्रत्यये इत्यर्थः। ढ्रलोपे पूर्वस्य दीर्घोऽणः इति सूत्रात् दीर्घः इति पदमनुवर्तते। ततश्च सूत्रार्थो भवति मन्त्रे सोम-अश्व-इन्द्रिय-विश्वदेव्य इत्येतेषाम् मतुप्-प्रत्यये दीर्घः स्यात् इति। कस्य दीर्घः इति आकाङ्क्षायामुच्यते - अचश्च इति परिभाषया अचः इति षष्ठ्यन्तम् पदम् लभ्यते। अचः आद्यस्य अन्त्यस्य वा कस्य स्थाने दीर्घः इति पृच्छायाम् उच्यते अलोऽन्त्यस्य इति परिभाषया अन्त्यस्यैव अलः स्थाने इत्यर्थलाभात् मन्त्रे सोम-अश्व-इन्द्रिय-विश्वदेव्य इत्येतेषाम् अन्त्यस्य अचः दीर्घः स्यात् मतुप्-प्रत्यये इति सम्पूर्णार्थः लभ्यते।

**उदाहरणम्** - सोमावती इत्युदाहरणम्।

**सूत्रार्थसमन्वयः** - सोमः अस्याम् अस्ति इति विग्रहे सोमशब्दात् तदस्यास्त्यस्मिन्निति मतुप् इति सूत्रेण मतुप्-प्रत्यये सोम मत् इति स्थिते मादुपधायाश्च मतोर्वोऽयवादिभ्यः इत्यनेन मकारस्य वकारे सोम वत् इति स्थिते मतुपः उगित्त्वात् उगितश्च इत्यनेन ङीप्-प्रत्यये अनुबन्धलोपे सोमवत् ई इति स्थिते प्रकृतसूत्रेण मकारोत्तराकारस्य दीर्घे आकारे संयोगे निष्पन्नात् सोमावतीशब्दात् सौ विभक्तिकार्ये सोमावती इति रूपम्।

## २०.२१) ओषधेश्च विभक्तावप्रथमायाम्॥ (६.३.१३२)

**सूत्रार्थः** - मन्त्रे ओषधिशब्दस्य दीर्घः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण दीर्घः विधीयते। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। ओषधेः च विभक्तौ अप्रथमायाम् इति सूत्रगतपदच्छेदः। न प्रथमा अप्रथमा। अर्थात् प्रथमा-भिन्ना इत्यर्थः। तच्च विभक्तौ इत्यस्य विशेषणम् अस्ति। तेन प्रथमा-भिन्नद्वितीयादिविभक्तौ इति लभ्यते। ओषधेः इति षष्ठ्यन्तं पदम्। च इति अव्ययपदम्। विभक्तौ इति सप्तम्यन्तं पदम्। अप्रथमायाम् इति सप्तम्यन्तं पदम्। तच्च विभक्तौ इत्यस्य विशेषणम्। मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ इति सूत्रात् मन्त्रे इति पदमनुवर्तते। ढ्रलोपे पूर्वस्य दीर्घोऽणः इति सूत्रात् दीर्घः इति पदमनुवर्तते। अचश्च अलोऽन्त्यस्य इति परिभाषाभ्याम् अन्त्यस्य अचः दीर्घः इत्यर्थलाभः। तथा च सूत्रार्थस्तावत् - मन्त्रे ओषधिशब्दस्य अन्त्यस्य अचः दीर्घः स्यात् इति।



**उदाहरणम्** - ओषधीभ्यः इत्युदाहरणम्।

**सूत्रार्थसमन्वयः** - ओषधिशब्दात् भ्यस्-प्रत्यये ओषधि भ्यस् इति स्थिते प्रकृतसूत्रेण ओषधिशब्दस्य अन्त्यस्य अचः इकारस्य दीर्घे ओषधी भ्यस् इति स्थिते सकारस्य रुत्वे विसर्गे ओषधीभ्यः इति रूपम् सिध्यति।

## २०.२२) इकः सुञि॥ (६.३.१३४)

**सूत्रार्थः** - ऋचि दीर्घ इत्येव।

**सूत्रावतरणम्** - ऋचि विषये इकः सुञि परे दीर्घविधानार्थं सूत्रमिदं विरचितम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण दीर्घः विधीयते। द्विपदात्मके अस्मिन् सूत्रे इकः इति षष्ठ्यन्तं पदम्। सुञि इति सप्तम्यन्तं निपातसंज्ञकं पदम्। ऋचि तु-नु-घ-मक्षु-तङ्-कुत्रो-रुष्याणाम् इति सूत्रात् ऋचि इति विषयसप्तम्यन्तं पदम् अनुवर्तते। ढ्रलोपे पूर्वस्य दीर्घोऽणः इति सूत्रात् अत्र दीर्घः इति पदम् अनुवर्तते। एवमत्र पदयोजना ऋचि सुञि इकः दीर्घः इति। ततश्च सूत्रार्थो भवति- ऋग्विषये इकः दीर्घः स्यात् सुञि परे इति। अतः अनेन सूत्रेण ऋग्वेदे सुञि परतः इकः दीर्घो भवति।

**उदाहरणम्** - अभीषुणः।

**सूत्रार्थसमन्वयः** - ऋग्वेदे अभीषुणः इति पदं वर्तते। एवञ्च अत्र ऋचि विषये अभि इत्यस्य इकः इकारात् परे सुञ् इति निपातः वर्तते। तस्मात् अनेन सूत्रेण तस्य इकः इकारस्य स्थाने दीर्घे ईकारे सूञः इति सूत्रेण सकारस्य स्थाने षकारे नश्च धातुस्थोरुषुभ्यः इति सूत्रेण च नकारस्य णकारे अभीषुणः इति रूपं सिध्यति।

## २०.२३) द्व्यचोऽतस्तिङः॥ (६.३.१३५)

**सूत्रार्थः** - मन्त्रे दीर्घः।

**सूत्रावतरणम्**- ऋचि मन्त्रे द्व्यचः तिङन्तस्य अतः दीर्घविधानार्थं सूत्रमिदम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण दीर्घः विधीयते। अस्मिन् सूत्रे द्व्यचः अतः तिङः इति पदच्छेदः। त्रिपदात्मके अस्मिन् सूत्रे द्व्यचः, अतः, तिङः चेति त्रीणि पदानि षष्ठ्येकवचनान्तानि। अस्मिन् सूत्रे ऋचि तु-नु-घ-मक्षु-तङ्-कुत्रो-रुष्याणाम् इति सूत्रात् ऋचि इति विषयसप्तम्यन्तं पदम् अनुवर्तते। ढ्रलोपे पूर्वस्य दीर्घोऽणः इति सूत्रात् अत्र दीर्घः इति पदम् अनुवर्तते। किञ्च मन्त्रे सोमाश्वेन्द्रिय-विश्व-देव्यस्य मतौ इति सूत्रात् मन्त्रे इति सप्तम्यन्तं पदम् अनुवर्तते। एवञ्च अत्र पदयोजना इत्थम्- ऋचि मन्त्रे द्व्यचः तिङः अतः दीर्घः इति। ततश्च सूत्रार्थो भवति- ऋग्विषये मन्त्रे द्व्यचः तिङन्तस्य अतः स्थाने दीर्घः स्यात् इति।

**उदाहरणम्** - विद्मा।

**सूत्रार्थसमन्वयः** - विद ज्ञाने इति अदादिगणे पठितात् विद्-धातोः कर्तरि लटि मसि शपि शपो लुकि विद् मस् इति स्थिते विदो लटो वा इति सूत्रेण मसः स्थाने म-इत्यादेशे विद्म इति रूपं भवति। अत्र



विद्म इति तिङन्तं पदं द्व्यच्कम्। अतः ऋग्विषये मन्त्रे विद्म इति तिङन्तस्य पदस्य अन्त्यस्य अकारस्य स्थाने प्रकृतसूत्रेण दीर्घे आकारे विद्मा इति रूपं सिध्यति।



## पाठगतप्रश्नाः-२

८. प्राणो अङ्गे इत्यादौ सन्धिः कुतो न भवति।
९. अङ्ग इत्यादौ च इति सूत्रे अङ्ग इत्यत्र का विभक्तिः।
१०. स्यः इति कीदृशं पदम्।
११. एष स्य भानुः इति वाक्ये स्य-इत्युत्तरसुलोपः केन।
१२. पितरामातरा इति शब्दः साधु न वा।
१३. सध इति कीदृशं पदम्।
१४. ओषधीभ्यः इत्यत्र ईकार कुतः।
१५. कस्मिन् वेदे सुञि परे इकः दीर्घः भवति।
१६. विद्मा इत्यत्र अकारस्य दीर्घः केन सूत्रेण।



## पाठसारः

पाठेऽस्मिन् ये विषया एतावता आलोचिताः ते अधुना संक्षेपेण उच्यन्ते। यथा नान्तादसंख्यादेः परस्य डटः थट् मट् च आगमौ भवतः। मत्वर्थे विनिप्रत्ययो भवति बहुलं छन्दसि इति सूत्रेण। छन्दसि बहुव्रीहौ बहुप्रजाः इति शब्दः निपात्यते। बहुव्रीहौ दन्तस्य दतृ-आदेशः भवति छन्दसि च इति सूत्रेण। छन्दसि ऋदन्तात् प्रातिपदिकात् बहुव्रीहेः कप्-प्रत्ययः न भवति। तुजादीनाम् दीर्घोऽभ्यासस्य इति सूत्रेण तुजादीनाम् अभ्यासस्य दीर्घो भवति। छन्दसि खिदेः विकल्पेन एचः आकारो भवति खिदेश्छन्दसि इति सूत्रेण। शीर्षंश्छन्दसि इति सूत्रेण शिरस् शब्दस्य शीर्षन् इति निपातो भवति। पुनः दीर्घाज्जसि इचि च पूर्वसवर्णदीर्घो भवति विकल्पेन। सहस्य सधादेशः सध मादस्थयोश्छन्दसि इति सूत्रेण भवति। ऋचि विषये इकः सुञि परे दीर्घः भवति इकः सुञि इति सूत्रेण। छन्दसि बाहुल्येन शेः लोपः भवति। ऋचि विषये इकः सुञि परे दीर्घो भवति इकः सुञि इति सूत्रेण। इत्येते विषयाः अस्मिन् पाठे अतीव सारल्येन आलोचिताः।



## पाठान्तप्रश्नाः

१. वा छन्दसि इति सूत्रं व्याख्यात।
२. ऋचश्छन्दसि इति सूत्रं व्याख्यात।



३. हरिश्चन्द्रः इति रूपं साधयत।
४. अङ्ग इत्यादौ च इति सूत्रं व्याख्यात।
५. विद्मा इति रूपं साधयत।



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तरकूटः-१**

१. स्थट् इति मट् इति च।
२. बहुलं छन्दसि इत्यनेन।
३. बहुप्रजाश्छन्दसि च इति सूत्रेण।
४. दन्तशब्दस्य दतृ इति आदेशो विधीयते।
५. ऋदन्तात् बहुव्रीहेः कप् निषिध्यते।
६. वैकल्पिकः।
७. शीर्षंश्छन्दसि इति सूत्रेण।

**उत्तरकूटः-२**

८. अङ्ग इत्यादौ च इति सूत्रकृतनियमात्।
९. अङ्ग इत्यादौ च इति सूत्रे अङ्ग इत्यत्र सप्तमीविभक्तिः।
१०. स्यः इति लुप्तषष्ठ्यन्तं पदम्।
११. स्यश्छन्दसि बहुलम् इति सूत्रेण।
१२. साधु रूपम् एतत्।
१३. अविभक्तिकं पदम्।
१४. ओषधेश्च विभक्तावप्रथमायाम् इति सूत्रेण भवति।
१५. ऋग्वेदे।
१६. द्व्यचोऽतस्तिङः इति सूत्रेण।

## इति विंशः पाठः



२१

# अष्टाध्याय्याः षष्ठसप्तमौ अध्यायौ

## प्रस्तावना

पूर्वतनपाठवत् अस्मिन् पाठे अपि दीर्घादिविधिविषये केचन विशिष्टाः नियमाः आलोचयिष्यन्ते। तेन वेदे दीर्घविधिः कुत्रचित् नित्यम्, कुत्रापि वा विकल्पेन, क्वचिच्च तस्य निषेधः भवति। ते च नियमाः लौकिकनियमतः भिन्ना एव। ततश्च अत्र धातूनाम् अडागमविषये आडागमविषये च विशेषरूपेण आलोचना करिष्यते। लोके यथा लुङ्-लङ्-लृङ्क्षु परेषु हलादीनां धातूनाम् अडागमः, अजादीनां च धातूनाम् आडागमः भवति तथैव अत्रापि अडागमः आडागमश्च भवतः परन्तु वेदे ते नियमाः किञ्चिद् भिन्ना एव। ते एव नियमाः अत्र संक्षेपेण आलोचयिष्यन्ते। तेन च अडाटौ क्वचित् नित्यं, कुत्रचित् च विकल्पेन भवतः। ततः तिङन्तप्रकरणे हेः अपित्त्वविषये आलोचना करिष्यते। लोके सेर्ह्यपिच्च इति सूत्रेण सेः स्थाने हिः आदेशः विधीयते, तस्मिन् च हौ अपित्त्वम् अतिदिश्यते। वेदे तु ह्यादेशविषये अपित्त्वधर्मवषये च विलक्षणाः केचन नियमाः सन्ति। ते च नियमाः अस्मिन् पाठे संक्षेपेण प्रस्तोष्यन्ते। ततः यणादेशविषये, इयङुवङादेशविषये, रुडागमादिविषये च संक्षेपेण कतिपये नियमाः कतिषुचन सूत्रेषु आलोचयिष्यन्ते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- वैदिके दीर्घविधिविषये विशिष्टान् नियमान् ज्ञातुं शक्नोति।
- वेदे तिङन्तप्रकरणे लुङ्-लङ्-लृङ्क्षु परेषु धातूनां कथम् अडागमाडागमौ भवतः इति ज्ञातुं प्रभवति।
- वैदिके तिङन्तप्रकरणे अपित्त्वधर्मस्य प्रयोजनं तथा हेः स्थाने ध्यादेशविषये तथा रुडागमादिवषये विशिष्टान् नियमान् ज्ञास्यति।
- वेदे नञ्समासभिन्नसमासे क्त्वः क्त्वादेशं ज्ञास्यति।

### २१.१) निपातस्य च॥ (६.३.१३६)

**सूत्रार्थः** - निपातस्य च ऋग्विषये दीर्घ आदेशो भवति।



**सूत्रावतरणम्-** पूर्वसूत्रैः ऋचि निपातानां दीर्घो न भवति। अतः तत्र दीर्घविधानार्थं सूत्रमिदं प्रस्तुतम्।

**सूत्रव्याख्या -** विधिसूत्रमिदम्। अनेन सूत्रेण दीर्घः विधीयते। द्विपदात्मके अस्मिन् सूत्रे निपातस्य इति षष्ठ्येकवचनान्तं पदम्, च इति अव्ययपदम्। अत्र ऋचि तु-नु-घ-मक्षु-तङ्-कुत्रो-रुष्याणाम् इति सूत्रात् ऋचि इति विषयसप्तम्यन्तं पदम्, ढ्रलोपे पूर्वस्य दीर्घोऽणः इति सूत्राच्च दीर्घः इति प्रथमैकवचनान्तं पदम् अनुवर्तते। अलुगुत्तरपदे इति सूत्रात् उत्तरपदे इति सप्तम्यन्तं पदम् अनुवृत्तम्। संहितायाम् इति सप्तम्येकवचनान्तम् पदम् अत्र अधिकृतम्। अत्र पदयोजना इत्थम् - ऋचि संहितायां निपातस्य च दीर्घः उत्तरपदे इति। सूत्रार्थस्तावत् ऋग्विषये संहितायाम् उत्तरपदे परतः निपातस्य दीर्घो स्यात् इति।

**उदाहरणम् -** एवा हि ते।

**सूत्रार्थसमन्वयः -** एवा इत्युदाहरणे एव इति शब्दस्य चादिगणे पाठात् चादयोऽसत्त्वे इति सूत्रेण तस्य निपातसंज्ञा। 'एवा हि ते' इति ऋङ्मन्त्रे उत्तरपदे परत एव इति निपातस्य अकारस्य स्थाने प्रकृतसूत्रेण दीर्घे आकारे एवा इति रूपं सिध्यति।

## २१.२) अन्येषामपि दृश्यते॥ (६.३.१३७)

**सूत्रार्थः -** अन्येषामपि पूर्वपदस्थानां दीर्घः स्यात्।

**सूत्रावतरणम्-** पूर्वसूत्रैः यत्र दीर्घः अविहितः, परन्तु वेदे दीर्घः दृश्यते, तेषु अवशिष्टेषु दीर्घविधानार्थं सूत्रमिदं विरचितम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन सूत्रेण दीर्घः भवति। त्रिपदात्मके अस्मिन् सूत्रे अन्येषाम् इति षष्ठ्यन्तं पदम्, अपि इति अव्ययम्, दृश्यते इति च तिङन्तं पदम्। अत्र ऋचि तु-नु-घ-मक्षु-तङ्-कुत्रो-रुष्याणाम् इति सूत्रात् ऋचि इति विषयसप्तम्यन्तं पदम्, ढ्रलोपे पूर्वस्य दीर्घोऽणः इति सूत्राच्च दीर्घः इति प्रथमैकवचनान्तं पदम् अनुवर्तते। अलुगुत्तरपदे इति सूत्रात् उत्तरपदे इति सप्तम्यन्तं पदम् अनुवृत्तम्। संहितायाम् इति विषयसप्तम्यन्तं च पदम् अत्र अधिकृतम्। पदयोजना इत्थम्- ऋचि संहितायाम् अन्येषामपि दीर्घः उत्तरपदे इति। सूत्रार्थस्तावत् - ऋग्वेदे संहिताविषये उत्तरपदे परतः अन्येषामपि दीर्घो भवति इति।

**उदाहरणम् -** पूरुषः।

**सूत्रार्थसमन्वयः -** लोके **पुरुषः** इत्येव रूपं भवति। परन्तु ऋचि संहितायां प्रकृतसूत्रेण उकारस्य दीर्घे **पूरुषः** इति रूपं सिध्यति।

## २१.३) छन्दस्युभयथा॥ (६.४.५)

**सूत्रार्थः -** नामि दीर्घो वा।

**सूत्रावतरणम्-** नामि इति सूत्रेण लोके धातृ नाम् इत्यत्र ऋकारस्य नित्यं दीर्घो भवति, वेदे तस्य दीर्घस्य विकल्पेन विधानार्थं सूत्रमिदं प्रणीतम्।



**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण विकल्पेन दीर्घो विधीयते। अस्मिन् सूत्रे छन्दसि इति विषयसप्तम्यन्तं पदम्, उभयथा इति च अव्ययम्। ढ्रलोपे पूर्वस्य दीर्घोऽणः इति सूत्रात् दीर्घः इति प्रथमैकवचनान्तं पदम्, नामि इति सूत्रात् नामि इति सप्तम्यन्तं पदं च अनुवर्तेते। अङ्गस्य इति पदमत्र अधिकृतम्। एवमत्र पदयोजना भवति- छन्दसि अङ्गस्य उभयथा दीर्घः नामि इति। अस्मिन् सूत्रे उभयथा इति पदनिर्देशात् सूत्रेण विहितं कार्यं विकल्पेन भवति। सूत्रार्थो भवति - छन्दसि विषये अङ्गस्य विकल्पेन दीर्घो भवति नामि परे इति।

**उदाहरणम्** - धातृणाम्-धातॄणाम्।

**सूत्रार्थसमन्वयः** - (वेदे) धातृ नाम् इति जाते धातृशब्दात् नामि परतः नामि इति सूत्रेण ऋकारस्य स्थाने नित्यं दीर्घे प्राप्ते प्रकृतसूत्रेण दीर्घस्य विकल्पेन विधानम् भवति। तेन दीर्घाभावपक्षे रषाभ्यां नो णः समानपदे इति सूत्रेण नकारस्य स्थाने णकारे **धातृणाम्**, दीर्घपक्षे **धातॄणाम्** चेति रूपद्वयं सिध्यति।

**विशेषः**- काशिकामते अस्मिन् सूत्रे न तिसृचतसृ इति सूत्रात् तिसृचतसृ इति पदस्य अनुवर्तनेन केवलं तिसृ, चतसृ इत्येतयोः शब्दयोः एव नामि परे प्रकृतसूत्रेण ऋकारस्य विकल्पेन दीर्घो भवति। भट्टोजिदीक्षितस्य मतेन तु सर्वेषामेव शब्दानां नामि परे विकल्पेन दीर्घो भवति।

## २१.४) वा षपूर्वस्य निगमे॥ (६.४.९)

**सूत्रार्थः** - षपूर्वस्याच उपधाया वा दीर्घोऽसंबुद्धौ सर्वनामस्थाने परे।

**सूत्रावतरणम्**- वेदविषये असम्बुद्धिसर्वनामस्थानपरकस्य नान्तपदस्य उपधाभूतस्य षपूर्वस्य विकल्पेन दीर्घविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण विकल्पेन दीर्घो विधीयते। त्रिपदात्मके अस्मिन् सूत्रे वा इति अव्ययम्, षपूर्वस्य इति षष्ठ्यन्तं पदम्, निगमे इति च विषयसप्तम्यन्तं पदम्। अङ्गस्य इति पदमत्र अधिकृतम्। ढ्रलोपे पूर्वस्य दीर्घोऽणः इति सूत्रात् दीर्घः इति प्रथमैकवचनान्तं पदम्, सर्वनामस्थाने चासम्बुद्धौ इति सूत्रात् सर्वनामस्थाने असम्बुद्धौ चेति सप्तम्यन्तं पदद्वयम्, नोपधायाः इति सूत्रात् नोपधायाः इति समस्तं षष्ठ्यन्तं पदं च अनुवर्तन्ते। नस्य उपधा नोपधा, तस्य नोपधायाः इति बहुव्रीहिसमासः। अत्र 'न' इति लुप्तषष्ठ्यन्तं पदम् अङ्गस्य इत्यस्य विशेषणम् अस्ति। अतः तदन्तविधिना नान्तस्य अङ्गस्य इत्यर्थलाभः। अत्र च पदयोजना- नोपधायाः अङ्गस्य दीर्घः असम्बुद्धौ सर्वनामस्थाने इति। सूत्रार्थो हि असम्बुद्धौ सर्वनामस्थाने परतः नान्तस्य अङ्गस्य षपूर्वस्य उपधासंज्ञकस्य वा दीर्घः स्यात् निगमे विषये इति।

**उदाहरणम्** - ऋभुक्षणम्, ऋभुक्षाणम्।

**सूत्रार्थसमन्वयः** - उणादिप्रत्ययेन निष्पन्नात् ऋभुक्षिन्-शब्दात् अमि ऋभुक्षिन् अम् इति स्थिते सुडनपुंसकस्य इति सूत्रेण अम्-प्रत्ययस्य सर्वनामस्थानसंज्ञायाम् इतोऽत्सर्वनामस्थाने इत्यनेन उपधायाः इकारस्य स्थाने अकारे ऋभुक्षन् अम् इति भवति। अत्र ऋभुक्षन् इति नान्तस्य पदसंज्ञकस्य अम्-रूपासमबुद्धिसर्वनामस्थानपरकत्वात् तस्य उपधायाः षपूर्वस्य अकारस्य प्रकृतसूत्रेण विकल्पेन दीर्घे

आकारे अट्कुप्वाङ्नुम्व्यवायेऽपि इत्यनेन नकारस्य स्थाने णकारे **ऋभुक्षाणम्** इति रूपं सिध्यति। अत्र दीर्घाभावे च **ऋभुक्षणम्** इति अपरं रूपम्।

## २१.५) जनिता मन्त्रे॥ (६.४.५३)

**सूत्रार्थः** - इडादौ तृचि णिलोपो निपात्यते।

**सूत्रावतरणम्-** मन्त्रे इडादितृच्परकस्य णेः लोपविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण णेः इकारस्य लोपो विधीयते। द्विपदात्मके अस्मिन् सूत्रे जनिता इति प्रथमान्तं पदम्, मन्त्रे इति च विषयसप्तम्यन्तं पदम्। अतो लोपः इति सूत्रात् लोपः इति प्रथमान्तं पदम्, निष्ठायां सेटि इति सूत्रात् सेटि इति सप्तम्यन्तं पदम् च अनुवृत्तम्। तृचि इति सप्तम्यन्तं पदं पूर्वसूत्रात् अनुवर्तते। पदयोजना- मन्त्रे णेः लोपः सेटि तृचि इति। अत्र णि- इति पदेन णिजादिप्रत्यया अवगन्तव्याः। ततः सूत्रार्थः- मन्त्रे णेः इकारस्य लोपः स्यात् इडादौ तृचि परतः इति।

**उदाहरणम्** - जनिता।

**सूत्रार्थसमन्वयः** - जन्-धातोः णिचि ततश्च तृचि जनि तृ इति स्थिते तृच्-प्रत्ययस्य इडागमे जनि इतृ इति स्थिते प्रकृतसूत्रेण इडादितृच्परकत्वात् णेः इकारस्य लोपे ततः विभक्तिकार्ये **जनिता** इति निपातितं रूपं सिध्यति। लोके तु णिलोपाभावे **जनयिता** इति रूपम्।

## २१.६) छन्दस्यपि दृश्यते॥ (६.४.७३)

**सूत्रार्थः** - अनजादीनाम् लुङ्-लङ्-लृङ्क्षु परेषु आडागमः स्यात्।

**सूत्रावतरणम्-** छन्दसि हलादीनामपि धातूनां लुङि लङि लृङि च परतः आडागमार्थं प्रकृतं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण आडागमः विधीयते। त्रिपदात्मके अस्मिन् सूत्रे छन्दसि इति विषयसप्तम्यन्तं पदम्, अपि इति अव्ययम्, दृश्यते इति च तिङन्तं पदम्। अङ्गस्य इति पदमत्र अधिकृतम्। लुङ्-लङ्-लृङ्क्ष्वडुदात्तः इति सूत्रात् लुङ्-लङ्-लृङ्क्षु इति सप्तम्यन्तं पदम् अनुवर्तते। आडजादीनाम् इति सूत्रात् आट् इति प्रथमैकवचनान्तं पदम् अनुवर्तते। अनजादीनाम् इति पदम् अत्र आक्षिप्यते। एवञ्च अत्र पदयोजना- छन्दसि अनजादीनाम् अपि लुङ्-लङ्-लृङ्क्षु आट् दृश्यते इति। छन्दसि अनजादीनामपि धातूनाम् अर्थात् हलन्तधातूनाम् लुङ्-लङ्-लृङ्क्षु परेषु आडागमः स्यात् इति सूत्रार्थः।

**उदाहरणम्** - आनट्।

**सूत्रार्थसमन्वयः** - नश्-धातोः कर्तरि लुङि तिपि च्लौ च्लेश्च लोपे नश् ति इति स्थिते अत्र लुङ्परकस्य हलादेः नश्-धातोः अनजादित्वात् आडजादीनाम् इति सूत्रेण आडागमाभावः। ततः प्रकृतसूत्रेण तस्य अनजादित्वात् अपि आडागमे तिपः इकारलोपे आनश् त् इति स्थिते शस्य षत्वे हलन्तात् परस्य ति इत्यस्य तकारस्य च हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् इत्यनेन लोपे आनष् इति स्थिते षस्य च जश्त्वे डकारे डस्य च विकल्पेन चर्त्वे टकारे **आनट्** इति रूपं सिध्यति। अत्र चर्त्वाभावपक्षे **आनड्** इति अपरं रूपमपि सिध्यति।



**विशेषः**- लोके लुङ्-लङ्-लृङ्परकत्वात् हलादीनां धातूनां लुङ्-लङ्-लृङ्क्ष्वड्डुदात्तः इत्यनेन सूत्रेण अडागमो भवति, अजादीनां च आडजादीनाम् इत्यनेन सूत्रेण आडागमो भवति। तस्मात् हलादीनां धातूनां न आडागमः, अजादीनां धातूनां न अडागमः। अत्र वेदे अनजादीनां हलादीनामपि धातूनां यथा आडागमः स्यात् तदर्थं सूत्रमिदं विरचितम्।

## २१.७) बहुलं छन्दस्यमाङ्योगेऽपि॥ (६.४.७५)

**सूत्रार्थः** - छन्दसि माङ्योगे अमाङ्योगेऽपि बहुलम् अट्-आटौ भवतः।

**सूत्रावतरणम्**- छन्दसि अर्थात् वेदे बाहुल्येन लुङि लङि लृङि च परतः धातूनाम् अडागमस्य आडागमस्य च निषेधार्थम्, माङ्-योगे च तयोः विधानार्थं सूत्रमिदं ग्रथितम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण माङ्योगे अडागमः आडागमश्च विधीयेते, माङ्-योगाभावे च तयोः अभावः। अस्मिन् सूत्रे बहुलम् इति प्रथमान्तं पदम्, छन्दसि अमाङ्योगे चेति सप्तम्येकवचनान्तं पदद्वयम्, अपि इति च अव्ययपदम्। माङा योगः माङ्योगः, न माङ्योगः अमाङ्योगः, तस्मिन् अमाङ्योगे। अङ्गस्य इति पदमत्र अधिकृतम्। लुङ्-लङ्-लृङ्क्ष्वड्डुदात्तः इति सूत्रात् लुङ्-लङ्-लृङ्क्षु इति सप्तम्यन्तं पदम्, अट् उदात्तः चेति प्रथमान्ते पदे, आडजादीनाम् इति सूत्रात् आट् इति प्रथमान्तं पदं च अनुवर्तन्ते। न माङ्योगे इति सूत्रात् माङ्योगे इति सप्तम्यन्तं पदं, न इति च अव्ययम् अत्र अनुवर्तेते। एवञ्च अत्र पदयोजना- छन्दसि बहुलं लुङ्-लङ्-लृङ्क्षु माङ्योगे अपि अट् आट्, अमाङ्योगे न (स्तः) इति। ततः छन्दसि बाहुल्येन लुङ्-लङ्-लृङ्क्षु अडाटौ न भवतः, माङ्योगे तु भवतः इति सूत्रार्थः। अत्र लुङ्-लङ्-लृङ्क्षु अडाटौ न, माङ्योगे स्तः इति वाक्यद्वयेन सह छन्दसि बहुलम् इति वाक्यस्य योगः भवति।

**उदाहरणम्** - जनिष्ठाः, अवाप्सुः।

**सूत्रार्थसमन्वयः** - जन्-धातोः कर्तरि थासि जन् थास् इति स्थिते धातोः च्लौ च्लेः च स्थाने सिचि सिचः इडागमे जन् इस् थास् इति स्थिते लुङ्परकत्वात् धातोः लुङ्-लङ्-लृङ्क्ष्वड्डुदात्तः इति सूत्रेण अडागमे प्राप्ते प्रकृतसूत्रेण तन्निषेधे सिचः सकारस्य षकारे थकारस्य च ठकारे विभक्तिकार्ये च **जनिष्ठाः** इति रूपम्। लोके **अजनिष्ठाः** इति रूपम्।

वप्-धातोः कर्मणि लुङि लस्य स्थाने व्यत्ययेन झौ वप् झि इति स्थिते झेः स्थाने जुसि अनुबन्धलोपे धातोः च्लौ च्लेः स्थाने सिचि अनुबन्धलोपे वप् स् उस् इति स्थिते वदव्रजहलन्तस्याचः इति सूत्रेण धातोः अकारस्य दीर्घे आकारे माङ्योगे अत्र धातोः लुङ्-लङ्-लृङ्क्ष्वड्डुदात्तः इत्यनेन धातोः प्राप्तस्य अडागमस्य न माङ्योगे इत्यनेन निषेधेऽपि छन्दसि प्रयोगवशात् प्रकृतसूत्रेण धातोः अडागमे प्रक्रियया मा **अवाप्सुः** इति रूपं सिध्यति।

**विशेषः** -अस्मिन् सूत्रे 'बहुलम्' इति पदग्रहणात् सूत्रेण विहितं कार्यं बहुलार्थे भवति।

## २१.८) छन्दस्युभयथा॥ (६.४.८६)

**सूत्रार्थः** - भूसुधियोर्यण् स्यादियङुवङौ च।



**सूत्रावतरणम्-** लोके अजादिसुपि परतः भूशब्दस्य सुधीशब्दस्य च यण् न भवति, अपि तु यथाक्रमम् उवङादेशः इयङादेशः च भवतः। अत्र वेदे यथा इयङुवङादेशाभ्याम् सह यणादेशस्यापि समुच्चयार्थम् सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण यणादेशः इयङुवङादेशौ च विधीयन्ते। अस्मिन् सूत्रे छन्दसि इत्यत्र विषयसप्तमी, उभयथा इति च अव्ययम्। अत्र न भूसुधियोः इति सूत्रात् भूसुधियोः इति षष्ठीद्विवचनान्तं पदम् अनुवर्तते। एवञ्च अत्र पदयोजना- छन्दसि भूसुधियोः उभयथा इति। ननु अत्र उभयथा किम् भवति इति जिज्ञासायाम्- इणो यण् इत्यस्मात् यण् इति प्रथमान्तं पदम्, ओः सुपि इत्यस्मात् सुपि इति सप्तम्यन्तं पदम्, अचि श्नुधातुभ्रुवां य्वोरियङुवङौ इत्यस्मात् अचि सप्तम्यन्तं पदम्, इयङुवङौ इति प्रथमाद्विवचनान्तं च पदम् अत्र सूत्रे अनुवर्तन्ते। तेन अत्र सूत्रार्थः- छन्दसि भूसुधियोः अजादिसुपि परे यण् इयङुवङादेशौ च भवन्ति इति।

**उदाहरणम्** - विभ्वम्- विभुवम्, सुध्यः- सुधियः।

**सूत्रार्थसमन्वयः** - विभू-शब्दस्य प्रातिपदिकसंज्ञायां ततः द्वितीयैकवचने अमि विभू अम् इति स्थिते प्रकृतसूत्रेण ऊकारस्य स्थाने यणि स्थानतः आन्तर्यात् वकारे **विभ्वम्** इति रूपम्, विकल्पेन ऊकारस्य च स्थाने उवङादेशे **विभुवम्** इति अपरमपि रूपम् सिध्यति। लोके तु **विभुवम्** इत्येव।

सुधी-शब्दस्य प्रातिपदिकसंज्ञायां ततः प्रथमाबहुवचने जसि अनुबन्धलोपे सुधी अस् इति स्थिते प्रकृतसूत्रेण ईकारस्य स्थाने यणि स्थानतः आन्तर्यात् यकारे विभक्तिकार्ये **सुध्यः** इति रूपम्, विकल्पेन ईकारस्य स्थाने इयङादेशे च **सुधियः** इति अपरमपि रूपम्। लोके तु **सुधियः** इत्येव।

## २१.९) श्रुशृणुपॄकृवृभ्यश्छन्दसि॥ (६.४.१०२)

**सूत्रार्थः** - श्रु, शृ, णु, पॄ, कृ, वृ- इत्येतेभ्यः उत्तरस्य हेः धिः आदेशो भवति छन्दसि विषये।

**सूत्रावतरणम्-** वेदे श्रुशृणुपॄकृवृभ्यः हेः स्थाने 'धि' इत्यस्य विधानार्थं सूत्रमिदं ग्रथितम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण हेः स्थाने 'धि' इति विधीयते। अस्मिन् सूत्रे श्रुशृणुपॄकृवृभ्यः इति पञ्चमीबहुवचनान्तं पदम्, छन्दसि इति सप्तम्यन्तं पदम्। हुझल्भ्यो हेर्धिः इति सूत्रात् हेः इति षष्ठ्यन्तं पदम्, धिः इति च प्रथमान्तं पदमत्र अनुवर्तेते। अत्र पदयोजना इत्थं- छन्दसि श्रुशृणुपॄकृवृभ्यः हेः धिः इति। तेन सूत्रार्थो भवति- छन्दसि श्रुशृणुपॄकृवृभ्यः परस्य हेः स्थाने धिः स्यात् इति।

**उदाहरणम्** - श्रुधी।

**सूत्रार्थसमन्वयः** - श्रु-धातोः कर्तरि लोटि सिपि श्रु सि इति स्थिते सेर्ह्यपिच्च इति सूत्रेण सेः स्थाने 'हि' इत्यादेशे श्रु हि इति स्थिते धातोः शप्-प्रत्यये बहुलं छन्दसि इत्यनेन च शपः लुकि प्रकृतसूत्रेण श्रु-धातोः परस्य हेः स्थाने धि-इत्यादेशे अन्येषामपि दृश्यते इति सूत्रेण धेः परस्य इकारस्य दीर्घे ईकारे **श्रुधी** इति रूपं सिध्यति। लोके तु **शृणु** इति रूपम्।

एवम् अन्यानि उदाहरणानि स्वयम् बोद्धव्यानि।



## २१.१०) वा छन्दसि॥ (३.४.८८)

**सूत्रार्थः** - छन्दसि अपित्त्वं विकल्प्यते।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण हिः विकल्पेन अपित् भवति। अस्मिन् सूत्रे वा इति अव्ययपदम्, छन्दसि इति विषयसप्तम्यन्तं पदम्। सेर्ह्यपिच्च इति सूत्रात् अत्र हि इति लुप्तप्रथमान्तं पदम्, अपित् इति प्रथमान्तं च पदम् अनुवर्तते। अत्र पदयोजना- छन्दसि हिः अपित् वा इति। तेन सूत्रार्थः भवति- छन्दसि विषये हिः (आदेशः) वा अपित् स्यात् इति।

**उदाहरणम्** - प्रीणाहि, प्रीणीहि।

**सूत्रार्थसमन्वयः** - प्रीञ् तर्पणे इति धातोः कर्तरि लोटि सिपि प्री सि इति स्थिते धातोः श्नाप्रत्यये अनुबन्धलोपे प्री ना सि इति स्थिते सिपः सेः स्थाने हि इत्यादेशे प्री ना हि इति स्थिते ई हल्यघोः इति सूत्रेण हेः अपित्त्वात् ना इत्यस्य आकारस्य स्थाने ईकारे प्राप्ते प्रकृतसूत्रेण हेः विकल्पेन अपित्त्वाभावे आकारस्य स्थाने ईकाराभावे नकारस्य स्थाने णकारे **प्रीणाहि** इति रूपम्। विकल्पेन हेः अपित्त्वपक्षे च **प्रीणीहि** इति रूपम्। लोके तु **प्रीणीहि** इत्येव।

## २१.११) अङितश्च॥ (६.४.१०३)

**सूत्रार्थः** - हेर्धिः स्यात्।

**सूत्रावतरणम्**- अङितः हेः स्थाने धिविधानार्थं सूत्रमिदं ग्रथितम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण हेः स्थाने धिः विधीयते। अस्मिन् सूत्रे हुझल्भ्यो हेर्धिः इति सूत्रात् हेः इति षष्ठ्यन्तं पदम्, धिः इति च प्रथमान्तं पदम् अनुवर्तेते। छन्दसि इति विषयसप्तम्यन्तं पदम् अत्र अनुवृत्तम्। अत्र पदान्वयश्च इत्थं- छन्दसि अङितः हेः धिः च इति। सूत्रार्थो हि - वेदे अङितः हेः स्थाने धिः स्यात् इति।

**उदाहरणम्** - प्रयन्धि।

**सूत्रार्थसमन्वयः** - प्रपूर्वकात् यम्-धातोः कर्तरि लोटि सिपि सेः स्थाने हि इत्यादेशे प्र यम् हि इति स्थिते प्रकृतसूत्रेण अपित्त्वात् अङितः हेः स्थाने धि इत्यादेशे प्र यम् धि इति स्थिते नश्चापदान्तस्य झलि इत्यनेन मकारस्य अनुस्वारे अनुस्वारस्य ययि परसवर्णः इत्यनेन अनुस्वारस्य परसवर्णे नकारे **प्रयन्धि** इति रूपं सिध्यति। लोके तु **प्रयच्छ** इति रूपम् भवति।

## २१.१२) मन्त्रेष्वाङ्यादेरात्मनः॥ (६.४.१४१)

**सूत्रार्थः** - आत्मन्शब्दस्यादेर्लोपः स्यादाङि।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण आत्मन्-शब्दस्य आदेः आकारस्य लोपो विधीयते। अस्मिन् सूत्रे मन्त्रेषु इति सप्तमीबहुवचनान्तं पदम्, आङि इति सप्तम्येकवचनान्तं पदम्, आदेः इति आत्मनः इति च षष्ठ्येकवचनान्तं पदद्वयम्। अल्लोपोऽनः इति सूत्रात् लोपः इति प्रथमान्तं पदम्

अनुवर्तते। आङ् इति टासंज्ञा। एवञ्च अत्र पदयोजना- मन्त्रेषु आङि आत्मनः आदेः लोपः इति। सूत्रार्थः भवति- मन्त्रेषु आङि परे आत्मन्शब्दस्य आदेः आकारस्य लोपः स्यात् इति।

**उदाहरणम्** - त्मना देवेषु।

**सूत्रार्थसमन्वयः** - आत्मन्-शब्दस्य प्रातिपदिकसंज्ञायां ततः टा-विभक्तौ अनुबन्धलोपे च आत्मन् आ इति स्थिते प्रकृतसूत्रेण मन्त्रे आङ्परकत्वात् आत्मन्-शब्दस्य आदेः आकारस्य लोपे सवर्णदीर्घे च **त्मना** इति रूपं सिध्यति। लोके तु **आत्मना** इति रूपम्।

## २१.१३) बहुलं छन्दसि॥ (७.१.८)

**सूत्रार्थः** - छन्दसि झस्य बहुलं रुडागमः स्यात्।

**सूत्रावतरणम्**- छन्दसि झादेशस्य अकारस्य बहुलं रुडागमार्थं सूत्रमिदं प्रस्तुतम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण झादेशस्य अतः रुडागमः विधीयते। अस्मिन् सूत्रे बहुलम् इति प्रथमान्तं पदम्, छन्दसि इति विषयसप्तम्यन्तं पदम्। झोऽन्तः इति सूत्रात् झः इति षष्ठ्यन्तं पदम्, अतो भिस ऐस् इति सूत्रात् अतः इति षष्ठ्यन्तं पदम्, शीङो रुट् इति सूत्रात् रुट् इति प्रथमान्तं च पदम् अनुवर्तन्ते। अत्र पदयोजना- छन्दसि झः अतः रुट् बहुलम् इति। सूत्रार्थो हि- छन्दसि झादेशस्य अतः रुडागमः स्यात्, स च आगमः बहुलम् इति।

**उदाहरणम्** - दुह्रे।

**सूत्रार्थसमन्वयः** - दुह्-धातोः कर्तरि लटि आत्मनेपदे झप्रत्यये दुह् झ (झ् अ) इति स्थिते आत्मनेपदेष्वनतः इत्यनेन झादेशस्य झकारस्य स्थाने अत् इत्यादेशे दुह् अत् अ इति स्थिते प्रकृतसूत्रेण अकारस्य रुडागमे अनुबन्धलोपे च दुह् र् त् अ इति जाते लोपस्त आत्मनेपदेषु इत्यनेन तकारस्य लोपे टिसंज्ञकस्य अकारस्य च स्थाने एकारे सर्ववर्णसम्मेलने **दुह्रे** इति रूपं सिध्यति। लोके तु **दुहते** इति रूपम्।



## पाठगतप्रश्नाः-१

१. एवा इत्यत्र निपातस्य दीर्घः केन सूत्रेण।
२. अन्येषामपि दृश्यते इति सूत्रस्य एकमुदाहरणं वदत।
३. छन्दस्युभयथा इति सूत्रे उभयथापदेन कस्य निर्देशः।
४. वा षपूर्वस्य निगमे इत्यनेन कस्मिन् परे विकल्पेन दीर्घः भवति।
५. जनिता मन्त्रे इति सूत्रेण कस्मिन् परे णिलोपः निपात्यते।
६. छन्दस्यपि दृश्यते इति सूत्रेण छन्दसि किं दृश्यते।
७. कस्मिन् परे धातूनाम् आडागमः अडागमश्च भवतः।
८. छन्दस्युभयथा इति सूत्रेण कयोः यण् इयङुवङौ च भवन्ति।
९. वा छन्दसि इत्यनेन किं विकल्प्यते।



१०. अङितश्च इत्यनेन हेः स्थाने कः आदेशः।

११. आत्मन्-शब्दस्य आदेः आकारस्य लोपः केन सूत्रेण।

१२. दुह्रे इत्यत्र रुडागमः केन सूत्रेण।

## २१.१४) बहुलं छन्दसि॥ (७.१.१०)

**सूत्रार्थः** - अतो भिस ऐस् स्यात्।

**सूत्रावतरणम्-** छन्दसि अतः परस्य भिसः स्थाने बाहुल्येन ऐस्-आदेशविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण छन्दसि अतः परस्य भिसः स्थाने बहुलम् ऐस् विधीयते। अस्मिन् सूत्रे बहुलम् इति प्रथमान्तं पदम्, छन्दसि इति च विषयसप्तम्यन्तं पदम्। अतो भिस ऐस् इति सूत्रात् अत्र अतः इति पञ्चम्यन्तं पदम्, भिसः इति षष्ठ्यन्तं पदम्, ऐस् इति च प्रथमान्तं पदम् अत्र अनुवर्तन्ते। छन्दसि अतः भिसः ऐस् बहुलम् इति पदयोजना। तेन अत्र सूत्रार्थो भवति- छन्दसि अतः परस्य भिसः स्थाने ऐसादेशः स्यात्, स च आदेशः बहुलं भवति इति।

**उदाहरणम्** - देवेभिः।

**सूत्रार्थसमन्वयः** - देव-शब्दस्य प्रातिपदिकसंज्ञायां ततः तृतीयैकवचने भिसि देव भिस् इति स्थिते अतो भिस ऐस् इत्यनेन भिसः स्थाने ऐसादेशे प्राप्ते प्रकृतसूत्रेण तस्य निषेधे बहुवचने झल्येत् इति सूत्रेण देव-इत्यस्य अकारस्य स्थाने एकारे विभक्तिकार्ये **देवेभिः** इति रूपं सिध्यति। लोके तु **देवैः** इति रूपम्।

## २१.१५) नेतराच्छन्दसि॥ (७.१.२६)

**सूत्रार्थः** - स्वमोरद्ड् न।

**सूत्रावतरणम्-** छन्दसि क्लीबलिङ्गे इतर-शब्दात् परयोः सु, अम्-इत्येतयोः स्थाने अद्ड्-आदेशस्य निषेधार्थं सूत्रमिदं प्रणीतमाचार्येण।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण इतर-शब्दात् परयोः स्वमोः स्थाने अद्ड्-आदेशस्य निषेधः विधीयते। त्रिपदात्मके अस्मिन् सूत्रे न इतरात् छन्दसि इति पदच्छेदः। तत्र न इति अव्ययम्, इतरात् इति पञ्चम्यन्तं पदं छन्दसि इति च सप्तम्येकवचनान्तं पदम्। अस्मिन् सूत्रे स्वमोर्नपुंसकात् इति सूत्रात् स्वमोः इति षष्ठीद्विवचनान्तं पदम्, अद्ड्डतरादिभ्यः पञ्चभ्यः इति सूत्रात् अद्ड् इति प्रथमैकवचनान्तं पदं च अनुवर्तते। अङ्गस्य इति पदं च अत्र अधिकृतम्। इतरात् इति पदम् अत्र अङ्गपदस्य विशेषणम्, अतः अत्र विभक्तिविपरिणामेन अङ्गपदं पञ्चम्यन्तं भवति। तेन अत्र पदयोजना भवति- छन्दसि इतरात् अङ्गात् स्वमोः अद्ड् न इति। सूत्रार्थो हि - छन्दसि विषये इतरशब्दात् उत्तरयोः स्वमोः अद्ड् आदेशो न स्यात् इति।



**उदाहरणम्** - इतरम्।

**सूत्रार्थसमन्वयः** - क्लीबलिङ्गे इतरशब्दस्य प्रातिपदिकसंज्ञायां ततः प्रथमैकवचनविवक्षायां सु-प्रत्यये इतर सु इति स्थिते अद्ड्डतरादिभ्यः पञ्चभ्यः इति सूत्रेण सुप्रत्ययस्य स्थाने अद्डादेशे प्राप्ते प्रकृतसूत्रेण तन्निषेधे अतोऽम् इति सूत्रेण सुप्रत्ययस्य स्थाने अमादेशे इतर अम् इति स्थिते अमि पूर्वः इति सूत्रेण पूर्वरपे एकादेशे अकारे इतर म् इति स्थिते वर्णसम्मेलने **इतरम्** इति रूपं सिध्यति। लोके तु **इतरत्** इति रूपम्।

## २१.१६) क्त्वापि च्छन्दसि॥ (७.१.३८)

**सूत्रार्थः** - अनञ्पूर्वे समासे क्त्वा इत्ययमादेशः स्यात् अपिशब्दात् ल्यबपि भवति।

**सूत्रव्याख्या** - विधिसूत्रेऽस्मिन् सूत्रे त्रीणि पदानि सन्ति। क्त्वा अपि छन्दसि इति सूत्रगदपदच्छेदः। क्त्वा इति प्रथमान्तं पदम्। अपि इति अव्ययपदम्। छन्दसि इति सप्तम्यन्तं पदम्। लोके समासेऽनञ्पूर्वे क्त्वो ल्यप् इति सूत्रेण नञ्समासभिन्नसमासे क्त्वः स्थाने ल्यबादेशः विधीयते। अनेन सूत्रेण वेदे नञ्समासभिन्नसमासे क्त्वः स्थाने क्त्वा इति आदेशः भवति। सूत्रे अपिग्रहणात् ल्यबपि भवति स च समासेऽसमासेऽपि भवति।

**उदाहरणम्** - परिधापयित्वा।

**सूत्रार्थसमन्वयः** - परिपूर्वकात् ण्यन्तात् धाधातोः णिचि क्त्वाप्रत्यये परि धा णिच् क्त्वा इति स्थिते अनेन सूत्रेण क्त्वः स्थाने क्त्वादेशे प्रकियाकार्ये परिधापयित्वा इति रूपं सिद्ध्यति। सूत्रे अपिग्रहणात् ल्यबपि सिद्ध्यति। यथा- उद्धृत्य तान् जुहोति इत्यत्र ल्यप् विहितः। अप्राप्तस्य ल्यपः प्रापणार्थं अपिशब्दस्यास्य प्रयोगः।

## २१.१७) सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः॥ (७.१.३९)

**सूत्रार्थः** - सुपां स्थाने सुलुक्पूर्वसवर्णआआत्शेयाडाड्यायाच्आल् इति एते आदेशाः स्युश्छन्दसि।

**सूत्रव्याख्या** - अत्र पदद्वयं विद्यते। सुपाम् इति षष्ठ्यन्तं पदम्। सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः इति प्रथमान्तं पदम्। क्त्वाऽपि छन्दसि इति सूत्रात् छन्दसि इति पदम् अनुवर्तते, अत्र वैषयिकसप्तमी। ततश्च सूत्रार्थो भवति सुब्विभक्तीनां स्थाने सुलुक्पूर्वसवर्णआआत्शेयाडाड्यायाच्आल् एते आदेशाः स्युः छन्दसि विषये इति।

**उदाहरणम्** - ऋजवः सन्तु पन्थाः। परमे व्योमन्।

**सूत्रार्थसमन्वयः** - ऋजवः सन्तु पन्थाः लोके पथिन्शब्दस्य प्रथमाबहुवचनविवक्षायां जस्प्रत्यये पथिन् जस् इति स्थिते इतोऽत्सर्वनामस्थाने इति सूत्रेण इकारस्य अकारे पथन् अस् इति स्थिते पथन् अस् इति स्थिते थो न्थः इति सूत्रेण थकारस्य न्थादेशे पन्थ् अन् अस् इति स्थिते नान्तस्य उपधादीर्घे पन्थानः इति रूपं स्यात् परन्तु प्रयोगस्य छान्दसत्वात् प्रकृतसूत्रेण जसः स्थाने सु इति आदेशेऽनुबन्धलोपे पथिन् स् इति स्थिते पथिमथ्यृभुक्षामात् इति सूत्रेण आकारान्तादेशे पथि आ स् इति



स्थिते इतोऽत् सर्वनामस्थाने इति सूत्रेण इकारस्य अकारे पथ आ स् इति जाते थो न्थः इति सूत्रेण थस्य स्थाने न्थादेशे पन्थ् अ आ स् इति स्थिते अकाराकारयोः सवर्णदीर्घे आकारे पन्था स् इति जाते सस्य रुत्वे विसर्गे पन्थाः इति रूपं सिध्यति।

परमे व्योमन्- व्योमन्शब्दस्य सप्तम्येकवचनविवक्षायां ङिप्रत्यये व्योमन् ङि इति स्थिते प्रयोगस्यास्य छान्दसत्वात् प्रकृतसूत्रेण ङेः लुक् विहिते **व्योमन्** इति रूपं सिद्ध्यति। लोके तु **व्योमनि, व्योम्नि** इति रूपद्वयं सिध्यति।

एवम् अग्रेऽपि बोद्धव्यम्।

### २१.१७.१) (वा.) आङ्याजयारामुपसंख्यानम्॥

**वार्तिकार्थः** - टाप्रत्ययस्य स्थाने आङ् अयाज् अयार् चेति आदेशा भवन्ति इति वक्तव्यम्।

**वार्तिकव्याख्या** - आङ्याजयाराम् इति षष्ठ्यन्तं पदम्। उपसंख्यानम् इति अव्ययपदम्। छन्दसि इति सप्तम्यन्तं पदम् अनुवर्तते, अत्र वैषयिकसप्तमी। सूत्रार्थो भवति- छन्दसि विषये तृतीयैकवचनस्य टा इत्यस्य स्थाने आङ् अयाच् अयार् इत्येते आदेशा भवन्ति इति वक्तव्यम्।

**उदाहरणम्** - बाहवा सिसृतम्।

**सूत्रार्थसमन्वयः** - बाहुशब्दात् टाप्रत्यये बाहुना इति स्यात्। किन्तु बाहु टा इति स्थिते प्रकृतवार्तिकेन टा इत्यस्य स्थाने आङ् आदेशे ङकारस्य इत्संज्ञायां लोपे बाहु आ इति स्थिते आङो ङित्त्वात् उकारान्तबाहुशब्दस्य च शेषो घ्यसखि इति सूत्रेण घिसंज्ञकत्वात् हकारोत्तरस्य उकारस्य घेर्ङिति इति सूत्रेण गुणे ओकारे बाहो आ इति स्थिते ओकारस्य स्थाने एचोऽयवायावः इति अवादेशे **बाहवा** इति रूपं सिद्ध्यति। लोके तु **बाहुना** इति रूपम्।

एवमन्यत्र बोद्धव्यम्।

## २१.१८) लोपस्त आत्मनेपदेषु॥ (७.१.४१)

**सूत्रार्थः** - आत्मनेपदसंज्ञकः यः तकारः तस्य छन्दसि विषये लोपः स्यात्।

**सूत्रव्याख्या** - अस्मिन् सूत्रे त्रीणि पदानि सन्ति। लोपः तः आत्मनेपदेषु इति सूत्रगतपदच्छेदः। लोपः इति प्रथमान्तं पदम्। तः इति षष्ठ्यन्तं पदम्। आत्मनेपदेषु इति सप्तम्यन्तं पदम्, अत्र वैषयिकसप्तमी। क्त्वाऽपि छन्दसि इति सूत्रात् छन्दसि इति पदमनुवर्तते। सूत्रार्थो भवति- आत्मनेपदनेपदेषु यः तकारः तस्य लोपः स्यात् वेदे।

**उदाहरणम्** - देवा अदुह्र।

**सूत्रार्थसमन्वयः** - देवा अदुह्र इति तु वैदिकप्रयोगः। अत एव अदुह्र इत्यत्र तङानावात्मनेपदम् इति सूत्रेण आत्मनेपदसंज्ञकस्य तप्रत्ययस्य लोपः भवति।

अदुह्र इत्युदाहरणे दुह्धातोः लङि झप्रत्यये आत्मनेपदेष्वनतः इति सूत्रेण झस्य स्थाने अत् आदेशे दुह् अत् इति स्थिते बहुलं छन्दसि इति सूत्रेण रुडागमे अनुबन्धलोपे टित्त्वात् आद्यावयवे दुह् र्



अत् अ इति जाते प्रकृतसूत्रेण तकारस्य लोपे दुह् र् अ अ इत्यवस्थायां अतो गुणे इति सूत्रेण अकारयोः पररूपे एकादेशे लुङ्लङ्लृङ्क्ष्वडुदात्तः इति सूत्रेण अडागमे अनुबन्धलोपे अ दुह् र् अ इति स्थिते सर्ववर्णसम्मेलने **अदुह्र** इति रूपं सिद्ध्यति। लोके तु **अदुहत** इत्येव रूपम्।

## २१.१९) यजध्वैनमिति च॥ (७.१.४३)

**सूत्रार्थः** - एनमित्यस्मिन्परे ध्वमोऽन्तलोपो निपात्यते।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। यजध्व एनम् इति च इति सूत्रगतपदच्छेदः। यजध्व इति तिङन्तं पदम्। एनम् इति लुप्तसप्तम्यन्तं पदम्। इति इति अव्ययपदम्। च इति अव्ययपदञ्च।

**उदाहरणम्** - यजध्वैनं प्रियमेधाः।

**सूत्रार्थसमन्वयः**- (यजध्वम् एनम्) यजध्वैनम् इति प्रयोगस्य अस्य छान्दसत्वात् यजध्वम् इत्यस्मात् परम् एनम् इति शब्दः अस्ति। अतः प्रकृतसूत्रेण मकारस्य लोपे निपातिते यजध्व एनम् इति स्थिते वृद्धिरेचि इति सूत्रेण अकारैकारयोः वृद्धौ ऐकारे यजध्वैनमिति रूपं सिद्धम्।

## २१.२०) तस्य तात्॥ (७.१.४४)

**सूत्रार्थः** - मध्यमपुरुषबहुवचनस्य स्थाने तात्स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे द्वे पदे स्तः। तस्य तात् इति सूत्रगतपदच्छेदः। तस्य इति षष्ठ्यन्तं पदम्। तात् इति प्रथमान्तं विधेयबोधकं पदम्। क्त्वाऽपि छन्दसि इति सूत्रात् छन्दसि इति सप्तम्यन्तं पदम् अनुवर्तते। यजध्वैनमिति च इति, तप्-तनप्-तन-थनाश्च इति च पूर्वोत्तरसूत्रसाहचर्यात् सूत्रेऽस्मिन् त इत्यनेन मध्यमपुरुषबहुवचनस्य ग्रहणं भवति, न तु तङः। ततः सूत्रार्थो भवति- छन्दसि विषये मध्यमपुरुषबहुवचनस्य स्थाने तात् इति आदेशो भवति।

**उदाहरणम्** - गात्रमस्या नूनं कृणुतात्।

**सूत्रार्थसमन्वयः** - हिंसाकरणार्थक-कृवि-धातोः लोटि मध्यमपुरुषबहुवचने थप्रत्यये तस्य स्थाने तस्थस्थमिपां तान्तन्तामः इति सूत्रेण तकारादेशे कृव् त इति जाते अनेकाल् शित्सर्वस्य इति परिभाषया परिष्कृतेन प्रकृतसूत्रेण तस्य स्थाने तात् इति सर्वादेशे कृव् तात् इति स्थिते मिदचोऽन्त्यात्परः इति परिभाषया परिष्कृतेन उदितो नुम्धातोः इति सूत्रेण नुमागमेऽनुबन्धलोपे कृ न् अ व् तात् इति स्थिते धिन्विकृण्व्योर च इति सूत्रेण उप्रत्यये वकारस्य अकारे च कृते कृ न् अ उ तात् इत्यवस्थायां अतो लोपः इति सूत्रेण अकारस्य लोपे कृ न् उ तात् इत्यवस्थायाम् ऋवर्णान्नस्य णत्वं वाच्यम् इति वार्तिकेन नस्य णत्वे कृ ण् अ उ तात् इति जाते **कृणुतात्** इति रूपं सिद्ध्यति। लोके तु **कृणुत** इति रूपम्।



## २१.२१) इदन्तो मसि॥ (७.१.४६)

**सूत्रार्थः** - मस् इति शब्दः इकारान्तो भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे द्वे पदे स्तः। इदन्तः मसि इति सूत्रगतपदच्छेदः। इदन्तः इति प्रथमान्तं पदम्। मसि इति प्रथमान्तं पदम् अत्र सकारात् इकारः उच्चारणार्थः। इत् अन्ते यस्य स इदन्तः। क्त्वापि छन्दसि इति सूत्रात् छन्दसि इति सप्तम्यन्तं पदम् अनुवर्तते, अत्र वैषयिकसप्तमी। ततश्च सूत्रार्थो भवति छन्दसि विषये मस् इत्ययं शब्दः इदन्तो भवति इति। अर्थात् मसः इक्-आगमो भवति। कित्त्वात् अन्त्यावयो भवति। तेन मसि इति इदन्तो भवति।

**उदाहरणम्** - नमो भरन्त एमसि।

**सूत्रार्थसमन्वयः** - एमसि इत्यत्र आ इमसि इति च्छेदः। इमसि इत्यत्र इण् गतौ इति धातोः लटि उत्तमपुरुषबहुचवनविवक्षायाम् लस्य स्थाने मसादेशे शपि शपो लुकि आ इ मस् इति स्थिते प्रकृतसूत्रेण मसः इदन्तत्वे आ इमसि इति जाते आद् गुणः इति सूत्रेण आकारेकारयोः गुणे एकारे एमसि इति रूपम् सिद्ध्यति। नमो भरन्त **एमसि** इत्यस्य नमस्कारं कुर्वन्तः आगताः वयम् इत्यर्थः। लोके तु (आ इमः) **इमः** इति रूपम् भवति।

## २१.२२) क्त्वो यक्॥ (७.१.४७)

**सूत्रार्थः** - छन्दसि क्त्वो यक् आगमो भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे द्वे पदे स्तः। क्त्वः यक् इति सूत्रगतपदच्छेदः। क्त्वः इति षष्ठ्यन्तं पदम्। यक् इति प्रथमान्तं पदम्। क्वाऽपि छन्दसि इति सूत्रात् छन्दसि इति सप्तम्यन्तं पदम् अनुवर्तते। छन्दसि विषये क्त्वः यक् आगमो भवति। यकः कित्त्वात् आद्यन्तौ टकितौ इति परिभाषया आगमिनः अन्त्यावयवो भवति।

**उदाहरणम्** - दिवं सुपर्णो गत्वाय।

**सूत्रार्थसमन्वयः** - गमनक्रियावाचिनो भ्वादिगणीयात् गम्लृ-गतौ इति धातोः क्त्वाप्रत्ययेऽनुबन्धलोपे गम् त्वा इति स्थिते अनुदात्तोपदेश-वनति-तनोत्यादीनामनुनासिकलोपो झलि क्ङिति इति सूत्रेण अनुनासिकस्य लोपे कृते ग त्वा इति स्थिते प्रकृतस्य छन्दोविषयत्वात् प्रकृतसूत्रेण यगागमेऽनुबन्धलोपे कित्त्वात् अन्त्यावयवे ग त्वा य इति स्थिते सर्ववर्णसम्मेलने **गत्वाय** इति रूपं सिद्ध्यति। लोके तु **गत्वा** इति रूपम्।



### पाठगतप्रश्नाः-२

१३. क्त्वापि च्छन्दसि इति सूत्रेण कः आदेशः विहितः।



१४. क्त्वापि च्छन्दसि इति सूत्रे अपि शब्दबलात् किं भवति।
१५. क्त्वापि च्छन्दसि इति सूत्रस्य उदाहरणं किम्।
१६. आङ्याजयारामुपसंख्यानम् इति सूत्रं वा वार्तिकं वा।
१७. आङ्याजयारामुपसंख्यानम् इति वार्तिकस्य एकमुदाहरणं लिखत।
१८. लोपस्त आत्मनेपदेषु इत्यनेन कस्य लोपः विधीयते।
१९. यजध्वैनमिति च इति सूत्रेण कस्य अन्तलोपः विधीयते
२०. श्रीग्रामण्योश्छन्दसि इति सूत्रेण कस्य नुडागमः विहितः।
२१. गोः पादान्ते इति सूत्रस्य उदाहरणमेकं लिखत।



## पाठसारः

अस्मिन् पाठे दीर्घविधिविषये आदौ केचन नियमाः आलोचिताः। निपातस्य च इति सूत्रेण ऋचि विषये निपातानां दीर्घो विधीयते। एवा इति तदुदाहरणम्। अन्येषामपि दृश्यते इति सूत्रेण ततः पूर्वम् आलोचितैः सूत्रैः यत्र दीर्घो न प्राप्नोति तेषु अवशिष्टेषु दीर्घो विधीयते। नामि इत्यनेन च नामि परे विकल्पेन दीर्घो विधीयते। जनिता मन्त्रे इति सूत्रेण वेदे इडादौ तृचि परे सति णेः इकारस्य लोपो विधीयते। छन्दस्यपि दृश्यते इत्यनेन वेदे लुङ्-लङ्-लृङ्क्षु परेषु हलादीनामपि धातूनाम् आडागमो विधीयते। बहुलं छन्दस्यमाङ्योगेऽपि इत्यनेन बहुलार्थे लुङ्-लङ्-लृङ्क्षु परेषु हलादीनाम् अजादीनां च धातूनाम् अडागमाडागमयोः निषेधो विधीयते, माङ्योगेऽपि च अडागमाडागमौ विधीयेते। छन्दस्युभयथा इत्यनेन भूसुधियोः यणादेशः इयङुवङौ च विधीयन्ते। श्रुशृणुपॄकृवृभ्यश्छन्दसि इत्यादिसूत्रैश्च हेः ध्यादेशविषये विशिष्टाः नियमाः प्रोक्ताः। मन्त्रेष्वाङ्यादेरात्मनः इति सूत्रेण मन्त्रेषु आङि परे आत्मन्शब्दस्य आदेः आकारस्य लोपः विधीयते। बहुलं छन्दसि इत्यनेन छन्दसि झादेशस्य अतः बाहुल्येन रुडागमस्य विधानं क्रियते। बहुलं छन्दसि इति द्वितीयेन सूत्रेण देवेभिः इत्यादौ अतो भिस ऐस् इत्यनेन प्राप्तस्य ऐसादेश्स्य निषेधः क्रियते। लोके क्लीबलिङ्गे डतरादिभ्यः पञ्चभ्यः शब्देभ्यः परयोः स्वमोः स्थाने अद्डादेशः भवति, परन्तु वेदे नेतराच्छन्दसि इति सूत्रेण तस्य अद्डादेशस्य निषेधः भवति। क्त्वापि छन्दसि इति सूत्रेण वेदे क्त्वः स्थाने क्त्वादेशः विधीयते। कथं सुपां सुलुक् इत्यादिसूत्रं सोर्लुक् विदधाति। कथं च लोपस्त आत्मनेपदेषु इति सूत्रं तप्रत्ययस्य लोपं विदधाति तदेतत् सर्वम् अस्मिन् पाठे आलोचितम् अस्ति।





## पाठान्तप्रश्नाः

१. निपातस्य च इति सूत्रं व्याख्यात।
२. छन्दस्युभयथा इति सूत्रं व्याख्यात।
३. ऋभुक्षाणम् इति रूपं साधयत।
४. आनट् इति रूपं साधयत।
५. अवाप्सुः इति रूपं साधयत।
६. सुधियः इति रूपं साधयत।
७. प्रीणाहि इति रूपं साधयत।
८. दुह्रे इति रूपं साधयत।
९. देवेभिः इति रूपं साधयत।
१०. नेतराच्छन्दसि इति सूत्रं व्याख्यात।
११. परिधापयित्वा इति रूपं साधयत।
१२. बाहवा इति रूपं साधयत।
१३. अदुह्र इति रूपं साधयत।
१४. कृणुतात् इति रूपं ससूत्रं साधयत।
१५. नमो भरन्त एमसि इत्यत्र एमसि इति रूपं साधयत।



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तरकूटः-१**

१. निपातस्य च।
२. पूरुषः।
३. यण् इयङुवङौ च इत्येतेषाम्।
४. असम्बुद्धौ सर्वनामस्थाने परे।
५. इडादौ तृचि परे।
६. हलादीनामपि धातूनाम् आडागमः।
७. लुङ्-लङ्-लृङ्क्षु परेषु।
८. भुसुधियोः।
९. अपित्त्वं विकल्प्यते।
१०. धिः आदेशः।



११. मन्त्रेष्वाङ्यादेरात्मनः इति सूत्रेण।

१२. बहुलं छन्दसि इति सूत्रेण।

**उत्तरकूटः-२**

१३. क्त्वादेशः।

१४. ल्यबादेशोऽपि।

१५. परिधापयित्वा।

१६. वार्तिकम्।

१७. बाहवा सिसृतम्।

१८. तप्रत्ययस्य।

१९. ध्वमः।

२०. आमः।

२१. विद्मा हि त्वा गोपतिं शूर गोनाम्।

## इति एकविंशः पाठः



# २२

# अष्टाध्याय्याः सप्तमः अध्यायः

## प्रस्तावना

पाठेऽस्मिन् अष्टाध्याय्याः सप्तमाष्टमाध्याययोः सूत्राणि व्याख्यातानि। पाठेऽस्मिन् वेदे ये तावत् अनङादेशविषये इडागमविषये इडागमनिषेधविषये ह्रस्वादेशविषये च विशिष्टा नियमा वर्तन्ते ते आलोचयिष्यन्ते। वेदे कथम् जस्प्रत्ययस्य असुगागमो भवति इति वक्ष्यते। ततः देवाः इत्यस्य देवासः इति वैदिकरूपं कथं भवति इत्यपि प्रदर्शयिष्यते। श्रीशब्दस्य ज्ञानशब्दस्य च नुडागमः कथं भवति इति प्रतिपादयिष्यते। पादान्तस्थितगोशब्दस्य नुडागमविषये नियमः कथयिष्यते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- वेदे असुगागमं ज्ञास्यति।
- श्रीज्ञानशब्दयोः नुडागमविषये नियमान् ज्ञास्यति।
- अस्थिदध्यादीनां कथं द्विवचने ईकारः भवति इति अवगमिष्यति।
- ऋकारान्तस्य धातोः कथम् उकारो भवति इति अवगमिष्यति।

## २२.१) आज्जसेरसुक्॥ (७.१.५०)

**सूत्रार्थः** - अवर्णान्तादङ्गात्परस्य जसोऽसुक् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। आत् जसेः असुक् इति सूत्रगतपदच्छेदः। आत् इति पञ्चम्यन्तं पदम्, जसेः इति षष्ठ्यन्तं पदम्, असुक् इति प्रथमान्तं पदम्। क्वाऽपि छन्दसि इति सूत्रात् छन्दसि इति अनुवर्तते। अङ्गस्य इत्यधिक्रियते, तच्च पञ्चम्यन्ततया विपरिणमते। अ-शब्दस्य पञ्चम्येकवनम् आत् इति। तस्य च अवर्णात् इत्यर्थः। आत् इति अङ्गस्य इत्यस्य विशेषणम् अतः येन विधिस्तदन्तस्य इति परिभाषया तदन्तग्रहणं भवति ततश्च अवर्णान्ताद् अङ्गात् इत्यर्थो लभ्यते। आत् इत्यस्य पञ्चम्यन्तत्वात् तस्मादित्युत्तरस्य इति परिभाषया परस्य इत्यर्थो लभ्यते। ततश्च सूत्रार्थो भवति छन्दसि अवर्णान्ताद् अङ्गात् परस्य जसेः (जसः) असुगागमो भवति इति।

**उदाहरणम्** - देवासः



**सूत्रार्थसमन्वयः** - देवशब्दस्य प्रथमाबहुवचनविवक्षायां जस्प्रत्ययेऽनुबन्धलोपे देव अस् इति स्थिते अङ्गसंज्ञकस्य देवशब्दस्य आद्यन्तौ टकितौ इति परिभाषया परिष्कृतेन प्रकृतसूत्रेण असुगागमेऽनुबन्धलोपे कित्त्वात् अन्त्यावयवे देव अस् अस् इति स्थिते वकारोत्तरस्याकारस्य असः अकारस्य च सवर्णदीर्घे आकारे देवासस् इति स्थिते सकारस्य रुत्वे विसर्गे **देवासः** इति रूपं सिद्धम्। एवं **ब्राह्मणासः** इति रूपमपि सिद्धम्। लोके तु यथाक्रमम् **देवाः**, **ब्राह्मणाः** इति प्रयोगः।

## २२.२) श्रीग्रामण्योश्छन्दसि॥ (७.१.५६)

**सूत्रार्थः** - छन्दसि श्रीग्रामण्योः (पदयोः) आमः नुट् (आगमो भवति)।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। श्रीग्रामण्योः इति षष्ठ्यन्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्। ह्रस्वनद्यापो नुट् इति सूत्रात् नुट् इति अनुवर्तते। आमि सर्वनाम्नः सुट् इति सूत्रात् आमि इति अनुवर्तते। अङ्गस्य इत्यस्य अनुवृत्तिरायाति। नुटः उकारटकारौ इतौ। टित्त्वात् च नुट् आद्यावयवो भवति। ततश्च सूत्रार्थो भवति श्रीशब्दस्य ग्रामशब्दस्य च परस्य आमः छन्दसि विषये नुडागमो भवति इति।

**उदाहरणम्** - श्रीणामुदारो धरुणो रयीणाम्।

**सूत्रार्थसमन्वयः** - श्रीशब्दात् आमि श्री आम् इति स्थिते वाऽमि इति सूत्रेण विकल्पेन नदीसंज्ञकः भवति ततश्च तस्मात् ह्रस्वनद्यापो नुट् इति सूत्रेण नुडागमः सिद्ध्यति। किन्तु नदीसंज्ञाभावपक्षे नुटः प्राप्तिर्न भवति अतः श्रीग्रामण्योश्छन्दसि इति सूत्रेण नुट् विधीयते नुटि कृते अनुबन्धलोपे नुटः टित्त्वात् आद्यावयवे श्री न आम् इति स्थिते रकारात् परस्य नकारस्य अट्कुप्वाङ्नुम्व्यवायेऽपि इति सूत्रेण णत्वे प्रकियाकार्ये **श्रीणाम्** इति रूपं सिद्धम्।

## २२.३) गोः पादान्ते॥ (७.१.५७)

**सूत्रार्थः** - गो इत्येतस्माद् उत्तरस्य आमः नुडागमः स्यात् पादान्ते।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे द्वे पदे स्तः। गोः पादान्ते इति सूत्रगतपदच्छेदः। गोः इति पञ्चम्यन्तं पदम्, पादान्ते इति सप्तम्यन्तं पदम्। गोः इत्यस्य पञ्चम्यन्तत्वात् तस्मादित्युत्तरस्य इति परिभाषया उत्तरस्य इति लभ्यते। पादान्ते इति वैषयिकसप्तमी अतः पादान्तविषये गोः परस्य आमः नुडागमः स्यात् इति सूत्रार्थो भवति। नुटः उकारटकारौ इतौ। नुटः टित्त्वकरणम् स्थानिनः आद्यावयवो यथा स्यात् तदर्थम्।

**उदाहरणम्** - विद्मा हि त्वा गोपतिं शूर गोनाम्।

**सूत्रार्थसमन्वयः** - अत्र गोनाम् इति शब्दः पादान्ते अस्ति अतः गो आम् इति स्थिते आद्यन्तौ टकितौ इति परिभाषया परिष्कृतेन प्रकृतसूत्रेण नुडागमेऽनुबन्धलोपे गो न् आम् इति स्थिते प्रक्रियया **गोनाम्** इति रूपं सिद्ध्यति।

**विशेषः** - सूत्रे पादान्ते इति उक्तम् अतः गोशब्दः पादान्ते न भवति चेत् नुडागमः न भवति। यथा गवां शता पृक्षयामेषु इत्यत्र गोशब्दः पादान्ते नास्ति अतः गोशब्दात् न नुट्। क्वचित् पादान्ते सत्यपि



नुडागमः न भवति यथा विराजं गोपति गवाम् इत्यत्र तत्र छन्दसि सर्वेषां वैकल्पिकत्वात् तन्न इति व्याख्येयम्।

## २२.४) छन्दस्यपि दृश्यते॥ (७.१.७६)

**सूत्रार्थः** - अस्थ्यादीनामनङ्।

**सूत्रावतरणम्-** लोके अस्थिदधिसक्थ्यक्ष्णाम् अजादितृतीयादौ विभक्तौ परतः अनङ्-आदेशः भवति। अथ छन्दसि तेषां शब्दानाम् अजादिविभक्तौ तथा हलादिविभक्तौ अपि परतः यथा अनङ् स्यात् तदर्थं सूत्रमिदं विरचितम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण अनङादेशो विधीयते। अस्मिन् सूत्रे छन्दसि इति विषयसप्तम्यन्तं पदम्, अपि इति अव्ययम्, दृश्यते इति च तिङन्तं पदम्। अत्र अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः इति सूत्रात् अस्थिदधिसक्थ्यक्ष्णाम् इति षष्ठीबहुवचनान्तं पदम्, अनङ् इति प्रथमान्तं पदम्, उदात्तः इति प्रथमान्तं स्वरबोधकं पदञ्चानुवर्तन्ते। एवञ्च अत्र पदयोजना- छन्दसि अपि अस्थिदधिसक्थ्यक्ष्णाम् उदात्तः अनङ् दृश्यते इति। अत्र हलादौ विभक्तौ परे अपि अस्थिदधिसक्थ्यक्ष्णाम् अनङादेशः दृश्यते इति विशेषः। तेन सूत्रार्थः भवति- छन्दसि अस्थिदधिसक्थ्यक्ष्णाम् शब्दानाम् अपि अनङादेशः स्यात्, स च उदात्तः इति। अनङः ङित्करणात् ङिच्च इत्यनेन अनङ् अन्त्यादेशो भवति इति बोध्यम्।

**उदाहरणम्** - इन्द्रो दधीचो अस्थभिः।

**सूत्रार्थसमन्वयः** - अस्थि-शब्दात् तृतीयाबहुवचनविवक्षायां भिस्-प्रत्यये अस्थि भिस् इति स्थिते अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः इति सूत्रेण अनङादेशाभावे प्रकृतसूत्रेण अस्थि-शब्दस्य इकारस्य स्थाने अनङादेशे अनुबन्धलोपे अस्थन् भिस् इति स्थिते नलोपः प्रातिपदिकान्तस्य इति सूत्रेण नकारस्य लोपे अस्थ भिस् इति स्थिते ततः विभक्तिकार्ये च **अस्थभिः** इति रूपं सिध्यति। लोके तु **अस्थिभिः** इति रूपम् भवति।

## २२.५) ई च द्विवचने॥ (७.१.७७)

**सूत्रार्थः** - छन्दसि अचि (हलि) च तृतीयादिषु द्विवचने अस्थिदधिसक्थ्यक्ष्णाम् ई (आदेशः) भवति।

**सूत्रावतरणम्-** छन्दसि अस्थिदधिसक्थ्यक्ष्णां शब्दानां द्विवचने परे ई-इत्यादेशविधानार्थं सूत्रमिदं विरचितम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण ईकारादेशो विधीयते। त्रिपदात्मकेऽस्मिन् सूत्रे ई इति प्रथमान्तं पदम्, च इति अव्ययम्, द्विवचने इति च सप्तम्यन्तं पदम्। अस्मिन् सूत्रे छन्दस्यपि दृश्यते इति सूत्रात् छन्दसि इति विषयसप्तम्यन्तं पदम्, अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः इति सूत्रात् अस्थिदधिसक्थ्यक्ष्णाम् इति षष्ठ्यन्तं पदम्, अनङ् इति प्रथमान्तं पदम्, उदात्तः इति प्रथमान्तं च पदम् अनुवर्तन्ते। तेन अत्र पदयोजना- छन्दसि अस्थिदधिसक्थ्यक्ष्णां द्विवचने च ई इति। ननु अत्र सूत्रे



कीदृशम् द्विवचनम् विवक्षितम् इति चेदुच्यते - अत्र इकोऽचि नुम्विभक्तौ इति सूत्रात् विभक्तौ इति सप्तम्यन्तं पदम्, रधि-जभोरचि इति सूत्रात् अचि इति सप्तम्यन्तं पदम्, तृतीयदिषु भाषितपुंस्कं पुंवद्गालवस्य इति सूत्रात् तृतीयादिषु इति सप्तमीबहुवचनान्तं च पदम् अनुवर्तनीयम्। तेन सूत्रार्थस्तावत् - छन्दसि अस्थिदधिसक्थ्यक्ष्णां शब्दानाम् अजादिषु हलादिषु च तृतीयादिषु विभक्तिषु द्विवचने ईकारादेशः भवति इति। अयम् च आदेशः अलोऽन्त्यस्य इति परिभाषया अस्थिदधिसक्थ्यक्ष्णां शब्दानाम् अन्त्यस्यैव अलः स्थाने भवति।

**उदाहरणम् -** अक्षीभ्याम्।

**सूत्रार्थसमन्वयः** - अक्षि-शब्दस्य प्रातिपदिकसंज्ञायां ततः तृतीयाद्विवचनविवक्षायां भ्याम्-प्रत्यये अक्षि भ्याम् इति स्थिते प्रकृतसूत्रेण इकारस्य स्थाने ईकारे अक्षी भ्याम् इति जाते सर्ववर्णसम्मेलने **अक्षीभ्याम्** इति रूपं सिध्यति।

## २२.६) बहुलं छन्दसि॥ (७.१.१०३)

**सूत्रार्थः** - छन्दसि विषये ऋकारान्तस्य धातोरङ्गस्य बहुलम् उकारादेशो भवति।

**सूत्रावतरणम्-** छन्दसि ऋकारान्तस्य धातोः अङ्गस्य बहुलम् अर्थे उकारादेशविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण उकारादेशो विधीयते। अस्मिन् सूत्रे बहुलम् इति प्रथमान्तं पदम्, छन्दसि इति च सप्तम्यन्तं पदम्। अस्मिन् सूत्रे ऋत इद् धातोः इति सूत्रात् ऋतः, धातोः चेति षष्ठ्यन्तं पदम्, उदोष्ठ्यपूर्वस्य इति सूत्रात् उत् इति प्रथमान्तं च पदम् अनुवर्तन्ते। अङ्गस्य इति षष्ठ्यन्तं पदम् अधिकृतम्। एवञ्चात्र पदयोजना- छन्दसि ऋतः धातोः अङ्गस्य बहुलम् उत् इति। ऋतः इति धातोः इत्यस्य विशेषणम् अतः ऋदन्तात् धातोः इत्यर्थलाभः। ततश्च सूत्रार्थः भवति- छन्दसि विषये ऋदन्तस्य धातोः अङ्गस्य बहुलम् उकारादेशो भवति।

**उदाहरणम् -** ततुरिः।

**सूत्रार्थसमन्वयः** - तृ-धातोः किन्-प्रत्यये तस्य च धातोः द्विर्वचनेऽचि इति सूत्रेण स्थानिवद्भावेन द्वित्वे तृ तृ इ इति जाते पूर्वस्य तृ-इत्यस्य अभ्याससंज्ञायां तस्य च अभ्यासस्य ऋकारस्य स्थाने उरत् इति सूत्रेण रपरे अकारे तर् तृ इ इति जाते हलादिः शेषः इत्यनेन अभ्यासस्य रेफस्य लोपे त तृ इ इति जाते प्रकृतसूत्रेण ऋकारस्य स्थाने रपरे उकारे त तुर् इ इति जाते वर्णसम्मेलने ततुरि इति समुदायो जायते। तस्य च समुदायस्य कृदन्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन प्रातिपदिकसंज्ञायां ततः विभक्तिकार्ये च **ततुरिः** इति रूपं सिध्यति।

## २२.७) हु ह्वरेश्छन्दसि॥ (७.२.३१)

**सूत्रार्थः** - ह्वरोर्निष्ठायां हु आदेशः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण ह्वृ-धातोः स्थाने हु-इत्यादेशः विधीयते। अस्मिन् सूत्रे हु इति प्रथमान्तं पदम्, ह्वरेः इति षष्ठ्यन्तम् पदम्, छन्दसि इति च सप्तम्यन्तं पदम्। अत्र श्वीदितो



निष्ठायाम् इति सूत्रात् निष्ठायाम् इति सप्तम्यन्तं पदम् अनुवर्तते। एवञ्च अत्र पदयोजना- छन्दसि ह्वरेः हु निष्ठायाम्। अत्र निष्ठापदेन क्तः क्तवतुः चेति प्रत्ययौ गृह्येते। एवञ्च सूत्रार्थः भवति- छन्दसि विषये निष्ठायाम् परतः ह्वृ-धातोः स्थाने हु-इत्यादेशः भवति।

**उदाहरणम्** - अहुतम्।

**सूत्रार्थसमन्वयः** - ह्वृ-धातोः निष्ठासंज्ञके क्तप्रत्यये अनुबन्धलोपे ह्वृ त इति स्थिते प्रकृतसूत्रेण ह्वृ-धातोः स्थाने हु-इत्यादेशे ततश्च विभक्तिकार्ये हुतम् इति जायते। ततः न हुतम् इति विग्रहे नञ्तत्पुरुषसमासे विभक्तिकार्ये च **अहुतम्** इति रूपं सिध्यति।

**विशेषः**- क्तक्तवतू निष्ठा इति सूत्रेण क्तप्रत्ययस्य क्तवतुप्रत्ययस्य च निष्ठासंज्ञा भवति।

## २२.८) ग्रसित-स्कभित-स्तभितोत्तभित-चत्त-विकस्ता-विशस्तृ-शंस्तृ-शास्तृ-तरुतृ-तरूतृ-वरुतृ-वरूतृ-वरूत्री-रुज्वलिति-क्षरिति-वमित्यमितीति च॥ (७.२.३४)

**सूत्रार्थः** - एते अष्टादश रूपाणि निपात्यन्ते।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण ग्रसितादिरूपाणां निपातनं विधीयते। अत्र ग्रसित-स्कभित-स्तभितोत्तभित-चत्त-विकस्ता-विशस्तृ-शंस्तृ-शास्तृ-तरुतृ-तरूतृ-वरुतृ-वरूतृ-वरूत्री-रुज्वलिति-क्षरिति-वमित्यमिति इति च इति पदच्छेदः। अस्मिन् सूत्रे ग्रसित-स्कभित-स्तभितोत्तभित-चत्त-विकस्ता-विशस्तृ-शंस्तृ-शास्तृ-तरुतृ-तरूतृ-वरुतृ-वरूतृ-वरूत्री-रुज्वलिति-क्षरिति-वमित्यमिति इति प्रथमान्तम् समस्तं पदम्, इति इत्यव्ययम्, च इत्यपि अव्ययम्। हु ह्वरेश्छन्दसि इति सूत्रात् अत्र छन्दसि इति सप्तम्यन्तं पदम् अनुवर्तते। अत्र च पदयोजना- छन्दसि ग्रसित-स्कभित-स्तभितोत्तभित-चत्त-विकस्ता-विशस्तृ-शंस्तृ-शास्तृ-तरुतृ-तरूतृ-वरुतृ-वरूतृ-वरूत्री-रुज्वलिति-क्षरिति-वमित्यमिति इति च इति।

अत्र ग्रसित-स्कभित-स्तभितोत्तभित- इत्यत्र ग्रसु-स्कम्भु-स्तम्भुधातूनाम् उकारस्य इत्संज्ञा भवति, अतः तेषाम् उदित्त्वात् इडागमाभावे प्रकृतसूत्रेण तेषाम् इट्सहितानि रूपाणि निपात्यन्ते। चत्त-विकस्ता-इत्यत्र द्वयोः धात्वोः क्तप्रत्यये ततश्च तयोः वेदे इडागमे प्राप्ते प्रकृतसूत्रेण तत्र इडागमाभावविशष्टे द्वे रूपे निपात्येते। विशस्तृ-शंस्तृ-शास्तृ इत्यत्र धातूनां तृच्परकत्वात् इडागमे प्राप्ते प्रकृतसूत्रेण तेषाम् इडागमाभावविशिष्टानि रूपाणि निपात्यन्ते। तरुतृ-तरूतृ-वरुतृ-वरूतृ-वरूत्री-इत्यत्रापि धातूनाम् इडागमे प्राप्ते प्रकृतसूत्रेण तत्र निपातनेन इडागमो निषिध्यते। उज्वलिति-क्षरिति-वमित्यमिति-इत्यत्र च उत्-पूर्वकस्य ज्वल्-धातोः, क्षर्-वम्-अम्- इत्येतेभ्यः धातुभ्यश्च परस्य शप्-प्रत्ययस्य प्रकृतसूत्रेण इडागमो विधीयते। अत्र सूत्रार्थस्तावत्- छन्दसि विषये ग्रसितस्कभित-स्तभितोत्तभित-चत्त-विकस्ता-विशस्तृ-शंस्तृ-शास्तृ-तरुतृ-तरूतृ-वरुतृ-वरूतृ-वरूत्री-रुज्वलिति-क्षरिति-वमित्यमिति एतानि रूपाणि निपात्यन्ते इति।

**उदाहरणम्** - उत्तभितम्, चत्तम्, तरूता, क्षरिति।



**सूत्रार्थसमन्वयः** - उत्पूर्वकस्य स्तम्भु-धातोः उकारस्य इत्संज्ञायां स्तम्भ्-धातोः सकारस्य स्थाने उदः स्थास्तम्भोः पूर्वस्य इत्यनेन आदेः परस्य इति परिभाषया परिष्कृतेन सकारस्य स्थाने स्थानत आन्तर्यात् थकारे झरो झरि सवर्णे इत्यनेन च तस्य थकारस्य लोपे उत्तम्भ्- धातोः क्त-प्रत्यये अनुबन्धलोपे उत्तम्भ् त इति स्थिते अनिदिताम् हल उपधायाः क्ङिति इत्यनेन मकारस्य लोपे यस्य विभाषा इत्यनेन निष्ठाक्तप्रत्ययस्य इडागमाभावे प्रकृतसूत्रेण तस्य क्तप्रत्यस्य इडागमे ततश्च प्रक्रियया **उत्तभितम्** इति रूपं सिध्यति। लोके तु **उत्तब्धम्** इति रूपम्।

चत्-धातोः क्तप्रत्यये अनुबन्धलोपे चत् त इति जाते क्तप्रत्ययस्य आर्धधातुकसंज्ञायाम् आर्धधातुकस्येड् वलादेः इत्यनेन धातोः इडागमे प्राप्ते प्रकृतसूत्रेण तन्निषेधे ततश्च प्रक्रियया चत्तम् इति रूपम्।

तृ-धातोः परे तृच्प्रत्यये अनुबन्धलोपे तृ तृ इति जाते प्रकृतसूत्रेण तृचः उटि अनुबन्धलोपे तृ उ तृ इति जाते ऋकारस्य च गुणे अकारे रपरत्वे च त् अर् उ तृ इति जाते तृच्- प्रत्ययस्य आर्धधातुकसंज्ञायाम् आर्धधातुकस्येड् वलादेः इति सूत्रेण धातोः इडागमे प्राप्ते प्रकृतसूत्रेण तन्निषेधे ततश्च वर्णसम्मेलने तरुतृ इति जाते प्रक्रियया तरुता इति रूपं सिध्यति। ऊटि च **तरूता** इति रूपम्। लोके तु **तरिता** इति रूपम्।

क्षर्- धातोः कर्तरि लटि तिपि क्षर् ति इति जाते धातोः शप्- प्रत्यये अनुबन्धलोपे क्षर् अ ति इति जाते प्रकृतसूत्रेण शपः अकारस्य इकारे सर्ववर्णसम्मेलने च **क्षरिति** इति वैदिकं रूपं सिध्यति। लोके तु **क्षरति** इति रूपम्।

## २२.९) मीनातेर्निगमे॥ (७.३.८१)

**सूत्रार्थः** - शिति ह्रस्वः।

**सूत्रावतरणम्**- वेदे शिति प्रत्यये परतः मी-धातोः अङ्गस्य ह्रस्वविधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण ह्रस्वः विधीयते। अस्मिन् सूत्रे मीनातेः इति षष्ठ्यन्तं पदम्, निगमे इति च सप्तम्यन्तं पदम्। अत्र प्वादीनां ह्रस्वः इति सूत्रात् ह्रस्वः इति प्रथमान्तं पदम्, ष्ठिवु-क्लमु-चमां शिति इति सूत्रात् शिति इति सप्तम्यन्तं पदं च अनुवर्तते। अङ्गस्य इति षष्ठ्यन्तं पदञ्चात्र अधिकृतम्। एवञ्च अत्र निगमे मीनातेः अङ्गस्य शिति ह्रस्वः इति पदयोजना। अत्र मीनातेः इति पदेन मी-धातुः ग्राह्यः। ततश्च अत्र सूत्रार्थः भवति - वेदे मी-धातोः अङ्गस्य शिति प्रत्यये परतः ह्रस्वः स्यात् इति।

**उदाहरणम्** - प्रमिणन्ति।

**सूत्रार्थसमन्वयः** - प्र-पूर्वकात् मीञ्- धातोः कर्तरि लटि झौ प्रमी झि इति स्थिते झोऽन्तः इति सूत्रेण झकारस्य स्थाने अन्त् आदेशे प्रमी अन्त् इ इति स्थिते क्र्यादिभ्यः श्ना इति सूत्रेण धातोः श्नाप्रत्यये अनुबन्धलोपे प्रमी ना अन्ति इति स्थिते प्रकृतसूत्रेण धातोः ईकारस्य ह्रस्वे इकारे श्नाभ्यस्तयोरातः इति सूत्रेण ना- इत्यस्य आकारस्य लोपे तस्य च श्नाप्रत्ययस्य नकारस्य णत्वे णकारे सर्ववर्णसम्मेलने च **प्रमिणन्ति** इति रूपं सिध्यति।



## २२.१०) बहुलं छन्दसि॥ (७.३.९७)

**सूत्रार्थः** - छन्दसि अस्तिसिचः परस्य अपृक्तस्य बहुलम् इट् स्यात्।

**सूत्रावतरणम्-** छन्दसि अस्तिसिचः परस्य अपृक्तस्य नित्यम् ईडागमे प्राप्ते तस्य विकल्पेन विधानार्थं निषेधार्थं वा सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण इडागमो विधीयते। अस्मिन् सूत्रे बहुलम् इति प्रथमान्तं पदम्, छन्दसि इति च सप्तम्येकवचनान्तं पदम्। अत्र अस्तिसिचोऽपृक्ते इति सूत्रात् अस्तिसिचः इति पञ्चम्यन्तं पदम्, अपृक्ते इति सप्तम्यन्तं पदम्, ब्रुव ईट् इति सूत्रात् ईट् इति प्रथमान्तं पदं च अनुवर्तन्ते। अत्र पदयोजना - छन्दसि अस्तिसिचः अपृक्ते बहुलम् ईट् इति। अत्र अस्तिसिचः इत्यत्र पञ्चमीविधानात् तस्मादित्युत्तरस्य इति परिभाषया अस्तिसिचः परस्य इत्यर्थः लभ्यते। उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् इति परिभाषया अत्र अस्तिसिचः परस्य अपृक्तस्य ईट् इत्यर्थलाभः। सूत्रार्थः भवति- छन्दसि विषये अस्तिसिचः परस्य अपृक्तसंज्ञकस्य प्रत्ययस्य बहुलम् ईट् स्यात् इति। अनेन च सूत्रेण सार्वधातुकसंज्ञकस्य अपृक्तसंज्ञकस्य च प्रत्ययस्य ईडागमो भवति। बहुलग्रहणात् ईडागमः क्वचित् भवति क्वचिन्न। बहुलम् किम् भवति इति तु उक्तमेव अस्ति। अपृक्त एकाल्प्रत्ययः इत्यनेन एकाल्प्रत्ययस्य अपृक्तसंज्ञा भवति। तादृशस्य च अपृक्तसंज्ञकस्य प्रत्ययस्य प्रकृतसूत्रेण ईडागमो भवति।

**उदाहरणम्** - आः। अक्षाः।

**सूत्रार्थसमन्वयः** - अदादिगणे पठितात् अस्-धातोः कर्तरि लङि तिपि अस् ति इति स्थिते अस्-धातोः शपि अदिप्रभृतिभ्यः शपः इति सूत्रेण शपः लुकि धातोश्च आडागमे अनुबन्धलोपे आ अस् ति इतश्च इत्यनेन इकारस्य लोपे आ अस् त् इति स्थिते अस्तिसिचोऽपृक्ते इत्यनेन तकारस्य ईडागमे प्राप्ते प्रकृतसूत्रेण तस्य निषेधे आटश्च इति वृद्धौ एकादेशे आस् त् इति जाते हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् इत्यनेन तकारस्य लोपे ततश्च विभक्तिकार्ये **आः** इति रूपं सिध्यति। लोके तु **आसीत्** इति रूपम्। एवम् अन्यत्र स्वयम् ऊह्यम्।

क्वचित् च ईडागमो भवति यथा अभैषीर्मा पुत्रक इति।

## २२.११) नित्यं छन्दसि॥ (७.४.८)

**सूत्रार्थः** - छन्दसि विषये चङ्युपधाया ऋवर्णस्य ऋन्नित्यम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण छन्दसि विषये चङ्युपधाया ऋवर्णस्य ऋत्वं विधीयते। अस्मिन् सूत्रे पदद्वयम् अस्ति। नित्यम् इति अव्ययपदम्। छन्दसि इति सप्तम्यन्तं पदम्। णौ चङ्युपधाया ह्रस्वः इति सूत्रात् णौ चङ्युपधाया इति पदद्वयम् अनुवर्तते। उर्ऋत् इति सुत्रात् उः ऋत् इति पदद्वयम् अनुवर्तते। अङ्गस्य इत्यधिकारे सूत्रमिदं पठितम्। ततश्च सूत्रार्थः भवति छन्दसि चङ्-परतः णौ परे धातोः उपधायाः ऋवर्णस्य नित्यम् ऋकारादेशः स्यात् इति।

**उदाहरणम्** - अवीवृधत्।



**सूत्रार्थसमन्वयः** - वृध्-धातोः णिच्प्रत्यये सनाद्यन्ता धातवः इति सूत्रेण धातुसंज्ञायां लुङ्लकारे तिपि अनुबन्धलोपे वृध् इ ति इति जाते च्लिप्रत्यये च्लेः स्थाने चङादेशे अनुबन्धलोपे वृध् इ अ ति इति जाते चङि इत्यनेन धातोः द्वित्वे द्विरुक्तस्य पूर्वभागस्य अभ्याससंज्ञायाम् उरत् इत्यनेन अभ्यासस्य ऋकारस्य अकारे रपरत्वे वर् ध् वृध् इ अ ति इति जाते हलादिः शेषः इति सूत्रेण आदिहलः वकारस्य शेषे व वृध् इ अ ति इति जाते चङ्प्रत्ययस्य आर्धधातुकसंज्ञायां णेरणिटि इति सूत्रेण णेः लोपे धातोः अडागमे प्रकृतसूत्रेण ऋवर्णस्य स्थाने ऋकारादेशे सन्वद्भावे सन्यतः इति सूत्रेण अभ्यासस्य अकारस्य इकारे दीर्घो लघोः इति सूत्रेण इकारस्य दीर्घे इतश्च इत्यनेन तिपः इकारस्य लोपे **अवीवृधत्** इति रूपं सिद्ध्यति।

## २२.१२) दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति॥ (७.४.३६)

**सूत्रार्थः** - एते क्यचि निपात्यन्ते।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण उक्तपदानि क्यचि निपात्यन्ते। अस्मिन् सूत्रे एकमेव पदमस्ति। "क्यचि च" इति सूत्रात् क्यचि इति पदम् अनुवर्तते। सूत्रार्थः भवति क्यचि परे दुरस्यु द्रविणस्यु वृषण्यति रिषण्यति इत्येतानि पदानि निपात्यन्ते इति।

**उदाहरणम्** - दुरस्युः, द्रविणस्युः, वृषण्यति, रिषण्यति।

**सूत्रार्थसमन्वयः** - दुष्टम् आत्मनः इच्छति इत्यर्थे दुष्टशब्दात् "सुप आत्मनः क्यच्" इति सूत्रेण क्यच्-प्रत्यये दुष्ट य इति स्थिते प्रकृतसूत्रेण दुष्टशब्दस्य स्थाने दुरस् इति निपात्यते। ततश्च "क्याच्छन्दसि" इति सूत्रेण उप्रत्यये दुरस् य उ इति जाते यचि भम् इत्यनेन भसंज्ञायाम् "यस्येति च" इत्यनेन यकारोत्तरवर्तिनः अकारस्य लोपे दुरस्यु इति जाते सुविभक्तौ **दुरस्युः** इति रूपम्। एवं द्रविणशब्दात् क्यच्-प्रत्यये **द्रविणस्युः** इति रूपम्। वृष् इति शब्दात् क्यच्प्रत्यये निपातनात् **वृषण्यति** इति रूपम्। रिष्टशब्दात् क्यच्प्रत्यये निपातनात् **रिषण्यति** इति रूपम्। भाषायां तु उप्रत्ययाभावात् यथाक्रमं **दुष्टीयति, द्रविणीयति, वृषीयति, रिष्टीयति** इति रूपाणि।



## पाठगतप्रश्नाः-१

१. आज्जसेरसुक् इति सूत्रेण किं विधीयते।
२. गोः पादान्ते इति सूत्रेण किं विधीयते।
३. छन्दस्यपि दृश्यते इति सूत्रेण किं विधीयते।
४. हलादिविभक्तौ परे वेदे अस्थिदधिसक्थ्यक्ष्णाम् अनङ् केन सूत्रेण।
५. छन्दसि अस्थिदधिसक्थ्यक्ष्णां शब्दानां कस्मिन् परे ईकारादेशो भवति।
६. ॠकारान्तस्य धातोः उकारादेशो केन सूत्रेण।
७. ह्वृ- धातोः कस्मिन् परे ह्रु- इत्यादेशः।
८. ग्रसित... इत्यादिसूत्रेण कति रूपाणि निपात्यन्ते।



९. मीनातेर्निगमे इत्यनेन कस्य धातोः ह्रस्वः भवति।
१०. छन्दसि कस्मात् परस्य अपृक्तस्य ईडागमो भवति।
११. अपृक्तसंज्ञा केन सूत्रेण।
१२. नित्यं छन्दसि इति सूत्रेण किं विधीयते।
१३. रिषण्यति इत्यस्य लौकिकं रूपं किम्।

## २२.१३) विभाषा छन्दसि॥ (७.४.४४)

**सूत्रार्थः** - छन्दसि क्त्वि जहातेः विभाषा हिः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण छन्दसि क्त्वाप्रत्यये परे जहातेः विकल्पेन हिः आदेशो विधीयते। अस्मिन् सूत्रे पदद्वयम् अस्ति। विभाषा इति अव्ययपदम्। छन्दसि इति सप्तम्यन्तं पदम्। सूत्रमिदम् "अङ्गस्य" इत्यधिकारे पठितम्। "दधातेर्हिः" इति सूत्रात् हिः इति अनुवर्तते। किञ्च "जहातेश्च क्त्वि" इति सम्पूर्णं सूत्रम् अनुवर्तते। अतः सूत्रार्थः भवति छन्दसि क्त्वाप्रत्यये परे हाधातोः विकल्पेन हि इत्यादेशो भवति इति। "अनेकाल्शित्सर्वस्य" इति परिभाषया अयमादेशः सम्पूर्णस्य हाधातोः स्थाने भवति।

**उदाहरणम्** - हित्वा शरीरम्। हीत्वा वा।

**सूत्रार्थसमन्वयः** - हाधातोः क्त्वाप्रत्यये परतः प्रकृतसूत्रेण विकल्पेन हाधातोः हि इत्यादेशे **हित्वा** इति रूपम्। पक्षे घुमास्थागापाजहातिसां हलि इति सूत्रेण ईकारादेशे **हीत्वा** इति रूपम्। छान्दसत्वात् ईकाराभावे **हात्वा** इत्यपि रूपं साधु।

## २२.१४) सुधितवसुधित नेमधितधिष्व धिषीय च॥ (७.४.४५)

**सूत्रार्थः** - सु वसु नेम एतत्पूर्वस्य दधातेः क्तप्रत्यये इत्वं निपात्यते।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण इत्वं निपात्यते। अस्मिन् सूत्रे पदद्वयम् अस्ति। सुधितवसुधितनेमधितधिष्वधिषीय इति प्रथमान्तं पदम्। च इत्यव्ययपदम्। विभाषा छन्दसि इति सूत्रात् छन्दसि इत्यनुवर्तते। सूत्रार्थः भवति छन्दसि सुधित वसुधित नेमधित धिष्व धिषीय एते निपात्यन्ते इति। तत्र पुनः क्तप्रत्यये परे सु-वसु-नेमपूर्वकस्यैव धाधातोः इकारः निपात्यते इत्यर्थः बोद्धव्यः। धीष्व धिषीय इत्यत्रापि धाधातोः इत्वं निपात्यते।

**उदाहरणम्** - गर्भं माता सुधितं दक्षिणासु। वसुधितमग्नौ। नेमधिता न पौंस्या।

**सूत्रार्थसमन्वयः** - सु-पूर्वकधाधातोः क्तप्रत्यये प्रकृतसूत्रेण निपातनात् धाधातोः इत्वे सुविभक्तौ सुधितम् इति रूपम्। एवं वसुधितम्, नेमधितम् इति रूपाणि भवन्ति।



धिष्व इत्यत्र धाधातोः लोट्लकारे आत्मनेपदे मध्यमपुरुषैकवचने थास्-प्रत्यये प्रकृतसूत्रेण निपातनात् इत्वे धि थास् इति जाते थासः से इत्यनेन थासः से इत्यादेशे सकारोत्तरस्य ऐकारस्य सवाभ्यां वामौ इत्यनेन वकारे सकारस्य च षकारे **धिष्व** इति रूपम्।

धिषीय इत्यत्र धाधातोः आशीर्लिङि उत्तमपुरुषैकवचने आत्मनेपदसंज्ञक-इट्-विभक्तौ प्रकृतसूत्रेण निपातनात् इत्वे धि इ इति जाते इटोऽत् इति सूत्रेण इकारस्य अकारे लिङः सीयुट् इत्यनेन सीयुडागमे सकारस्य षत्वे **धिषीय** इति रूपम्।

## २२.१५) दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतं वरीवृजन्मर्मृज्यागनीगन्तीति च॥ (७.४.४२)

**सूत्रार्थः** - एतेऽष्टादश निपात्यन्ते।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण उक्तपदानि निपात्यन्ते। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। "कृषेश्छन्दसि" इति सूत्रात् छन्दसि इत्यनुवर्तते। "अत्र लोपोऽभ्यासस्य" इति सूत्रात् अभ्यासस्य इत्यनुवर्तते। अङ्गस्य इत्यधिकारः आगच्छति। सूत्रेणानेन दाधर्ति इत्यादीनि अष्टादश पदानि निपात्यन्ते।

**उदाहरणम्** - दाधर्ति, दधर्ति, दर्धर्षि इत्यादीनि।

**सूत्रार्थसमन्वयः** - दाधर्ति- धृधातोः णिच्प्रत्यये लटि धातोः आत्मनेपदित्वेऽपि निपातनात् परस्मैपदे तिपि शपि "बहुलं छन्दसि" इत्यनेन शपः श्लौ "णेरनिटि" इत्यनेन णिचः लुकि "श्लौ" इति सूत्रेण धातोः द्वित्वे धृ धृ ति इति जाते द्विरुक्तस्य प्रथमस्य धृ इत्यस्य "पूर्वोऽभ्यासः" इति सूत्रेण अभ्याससंज्ञायाम् "उरत्" इति सूत्रेण ऋकारस्य अकारे "उरण् रपरः" इति सूत्रेण रपरत्वे धर् धृ ति इति जाते "हलादिः शेषः" इति सूत्रेण अभ्यासस्य आदेः हलः धकारस्य शेषे "अभ्यासे चर्च" इति सूत्रेण धकारस्य चर्त्वे दकारे द धृ ति इति जाते "सार्वधातुकार्धधातुकयोः" इति सूत्रेण ऋकारस्य गुणे रपरत्वे च द धर् ति इति जाते निपातनात् अभ्यासस्य अकारस्य दीर्घे **दाधर्ति** इति रूपम्।

**दर्धर्ति**- धृधातोः लटि तिपि शपि शपः श्लौ धातोः द्वित्वे अभ्यासस्य रुगागमे प्रक्रियया दर्धर्ति इति रूपम्।

**दर्धर्षि**- धृधातोः लटि तिपि शपि प्रक्रियया दर्धर्षि इति रूपम्।

**बोभूतु**- भूधातोः यङ्लुकि लोटि तिपि रूपमिदम्। अत्र धातोः गुणाभावः निपात्यते। लोके तु **बोभोतु** इति रूपं भवति।

**तेतिक्ते**- तिज्धातोः यङ्लुकि लोटि आत्मनेपदे तप्रत्यये तेतिक्ते इति रूपम्। अत्र धातोः आत्मनेपदित्वं निपात्यते।

**अलर्षि**- ऋधातोः लटि सिपि रूपमिदम्।



**आपनीफणत्-** आङ् इत्युपसर्गपूर्वात् फण्-धातोः यङि यङ्लुकि शतृप्रत्यये अभ्यासस्य नीगागमे आपनीफणत् इति रूपम्। अत्र नीक्-आगमः निपात्यते।

**संसनिष्यदत्-** समित्युपसर्गपूर्वकात् स्यन्द्-धातोः यङि यङ्लुकि धातोः द्वित्वे शतृप्रत्यये निगागमे धातोः सकारस्य षत्वे रूपमिदम्। अत्र निक्-आगमः धातोः सकारस्य षत्वं च निपात्यते।

**करिक्रत्-** कृधातोः यङि यङ्लुकि शतृप्रत्यये धातोः द्वित्वे अभ्यासकार्ये रिगागमे करिक्रत् इति रूपम्। अत्र कुहोश्चुः इति सूत्रेण प्राप्तस्य अभ्यासस्य ककारस्य चुत्वस्य अभावः निपात्यते। किञ्च रिक्-आगमः अपि निपात्यते।

**कनिक्रदत्-** क्रन्द्-धातोः लुङि तिपि च्लौ च्लेरङि धातोः द्वित्वे निगागमे नलोपे इकारलोपे च कनिक्रदत् इति रूपम्। अत्र अडाभावः, धातोः द्वित्वम्, अभ्यासस्य चुत्वाभावः, निक्-आगमश्च निपात्यन्ते।

**भरिभ्रत्-** भृधातोः यङि यङ्लुकि धातोः द्वित्वे शतृप्रत्यये उरत् इति सूत्रेण अभ्यासस्य ऋकारस्य अत्वे रपरत्वे भर् भृ अत् इति जाते रेफस्य लोपे भ भृ अत् इति जाते इत्वाभावस्य, जश्त्वाभावस्य, अभ्यासस्य रिगागमस्य च प्रकृतसूत्रेण निपातनात् यण्सन्धौ भरिभ्रत् इति रूपम्। भृञामित् इति सूत्रेण इत्त्वम् प्राप्तम्, अभ्यासे चर्च इत्यनेन जश्त्वम् प्राप्तम्। तयोः अभावः अनेन निपात्यते।

**दविध्वतः-** ध्वृधातोः यङि यङ्लुकि धातोः द्वित्वे शतृप्रत्यये अभ्यासस्य जश्त्वे रिगागमे च जसि सकास्य रुत्वे विसर्गे रूपमिदम्। अत्र धातोः ऋकारलोपः, नुमाभावश्च निपात्यते।

**दविद्युतत्-** द्युत्-धातोः यङि यङ्लुकि शतृप्रत्यये धातोः द्वित्वे प्रक्रियया रूपमिदम्। अत्र द्युतिस्वाप्योः सम्प्रसारणम् इति सूत्रेण प्राप्तस्य अभ्यासस्य सम्प्रसारणस्य अभावः, अभ्यासस्योकारस्य अकारः च निपात्यते।

**तरित्रतः-** तृधातोः शतृप्रत्यये शपि धातोः तृ अ अत् इत्यवस्थायां व्यत्ययो बहुलम् इति सूत्रेण शपः श्लु-आदेशे श्लौ इति सूत्रेण धातोः द्वित्वे उरत् इति सूत्रेण अभ्यासस्य ऋकारस्य अकारे रपरत्वे हलादिः शेषः इति सूत्रेण रेफस्य लोपे निपातनात् रिगागमे प्रातिपदिकसंज्ञायां ङसि तरित्रतः इति रूपम्। अत्र रिगागमः निपात्यते।

**सरीसृपतम्-** सृप्-धातोः शतृप्रत्यये अभ्यासस्य रिगागमे अम्-विभक्तौ रूपमिदम्। अत्र अभ्यासस्य रिगागमः निपात्यते।

**वरीवृजत्-** वृज्-धातोः शतृप्रत्यये शपि शपः श्लावादेशे धातोः द्वित्वे अभ्यासस्य ऋकारस्य अत्वे रपरत्वे वर्ज् वृज् अत् इति जाते हलादिः शेषः इति सूत्रेण रेफस्य जकारस्य लोपे च निपातनात् रीगागमे वरीवृजत् इति रूपम्। अत्र रीगागमः निपात्यते।

**मर्मृज्य-** मृज्-धातोः लिटि तिपि णलि धातोः द्वित्वे अभ्यासस्य ऋकारस्य अकारे रपरत्वे मर् ज मृज् अ इति जाते हलादिः शेषः इति सूत्रेण रेफस्य जकारस्य च लोपे म मृज् अ इति जाते निपातनात् अभ्यासस्य रीगागमे धातोः युगागमे च मर्मृज्य इति रूपम्। अत्र अभ्यासस्य रीगागमः धातोः युगागमश्च निपात्यते। लोके तु **ममार्ज** इति रूपम्।



**आगनीगन्ति**- आङ्पूर्वकात् गम्धातोः लटि तिपि शपि शपः श्लौ धातोः द्वित्वे अभ्यासस्य मकारस्य लोपे निपातनात् अभ्यासस्य नीगागमे सन्धौ आगनीगन्ति इति रूपम्। अत्र अभ्यासस्य कुहोश्चुः इति सूत्रेण प्राप्तस्य चुत्वस्य अभावः, अभ्यासस्य नीगागमः च निपात्यते।

## २२.१६) ससूवेति निगमे॥ (७.४.७४)

**सूत्रार्थः** - सूतेर्लिटि परस्मैपदं वुगागमोऽभ्यासस्य चात्वं निपात्यते।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे पदत्रयम् अस्ति। ससूव इति प्रथमान्तं पदम्। इति इत्यव्ययपदम्। निगमे इति सप्तम्यन्तं पदम्। "भवतेरः" इति सूत्रात् अः इत्यनुवर्तते। "व्यथो लिटि" इति सूत्रात् लिटि इत्यनुवर्तते। "अत्र लोपोऽभ्यासस्य" इति सूत्रात् अभ्यासस्य इत्यनुवर्तते। सूत्रमिदम् "अङ्गस्य" इत्यधिकारे पठितम्। सूत्रार्थो हि सू-धातोः लिटि परस्मैपदं, वुगागमः, अभ्यासस्य च अत्वं निपात्यते।

**उदाहरणम्** - गृष्टिः ससूव स्थविरम्।

**सूत्रार्थसमन्वयः** - सू-धातोः लिटि निपातनात् परस्मैपदे तिपि तिपः णलि सू अ इति जाते धातोः द्वित्वे ह्रस्वः इत्यनेन अभ्यासस्य अचः ह्रस्वे सु सू अ इति जाते निपातनात् अभासस्य उकारस्य अकारे वुगागमे च **ससूव** इति रूपं भवति।

## २२.१७) बहुलं छन्दसि॥ (७.४.७८)

**सूत्रार्थः** - अभ्यासस्य इकारः स्याच्छन्दसि।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण श्लौ बहुलम् इत् विधीयते। अस्मिन् सूत्रे पदद्वयम् अस्ति। बहुलम् इति प्रथमान्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्। "अत्र लोपोऽभ्यासस्य" इति सूत्रात् अभ्यासस्य इति पदम् अनुवर्तते। "निजां त्रयाणां गुणः श्लौ" इति सूत्रात् श्लौ इति पदम् अनुवर्तते। "भृञामित्" इति सूत्रात् इत् इत्यनुवर्तते। ततः सूत्रार्थः भवति छन्दसि श्लौ परतः अभ्यासस्य बहुलम् इकारः भवति इति। अलोऽन्त्यस्य इति परिभाषया अभ्यासस्य अन्त्यस्य अलः एव इत्वं भवति।

**उदाहरणम्** - पूर्णा विवष्टि।

**सूत्रार्थसमन्वयः** - वश्-धातोः लटि तिपि शपि वश्-धातोः अदादित्वात् अदिप्रभृतिभ्यः शपः इत्यनेन शपः लुकि प्राप्ते व्यत्ययेन शपः श्लौ धातोः द्वित्वे वश् वश् ति इति जाते अभ्यासस्य शकारस्य लोपे व वश् ति इति जाते प्रकृतसूत्रेण अभ्यासस्य अकारस्य इकारे वि वश् ति इति जाते शकारस्य "व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" इति सूत्रेण षत्वे **विवष्टि** इति रूपम्।



## पाठगतप्रश्नाः-२

१४. "विभाषा छन्दसि" इति सूत्रेण किं विधीयते।

१५. हाधातोः क्त्वाप्रत्यये छन्दसि कति रूपाणि भवन्ति। कानि च तानि।



१६. सुधितम् इत्यत्र धाधातोः इत्त्वं कथं भवति।
१७. धिषीय इति कस्मिन् लकारे रूपम्।
१८. छन्दसि सूधातोः लिटि प्रथमपुरुषैकवचने किं रूपम्।
१९. वश्-धातोः लिटि अभ्यासस्य इकारः केन सूत्रेण भवति।



## पाठसारः

लोके यथा अजादिविभक्तौ परतः अस्थिदधिसक्थ्यक्ष्णाम् अनङ्- आदेशः भवति, तद्वत् वेदे अपि भवति। अत्र हलादिविभक्तौ परे अपि छन्दस्यपि दृश्यते इति सूत्रेण अनङ्- आदेशः विधीयते। ई च द्विवचने इत्यनेन सूत्रेण अस्थिदधिसक्थ्यक्ष्णां शब्दानां द्विवचने परतः ईकारादेशो विधीयते। ह्व ह्वरेश्छन्दसि इत्यनेन सूत्रेण निष्ठायां परे ह्वृ-धातोः स्थाने ह्व इत्यादेशो भवति। ग्रसित-स्कभितादिसूत्रेण छन्दसि इट्सहितानि इड्-रहितानि च अष्टादश रूपाणि निपात्यन्ते। मीनातेर्निगमे इत्यनेन शिति प्रत्यये परे मीञ् धातोः ईकारस्य ह्रस्वः विधीयते। बहुलं छन्दसि इत्यनेन छन्दसि अस्तिसिचः परस्य अपृक्तस्य बहुलम् अर्थे इडागमो भवति। छन्दसि विषये चङ्युपधाया ऋवर्णस्य ऋत् नित्यं भवति। छन्दसि श्लौ परतः अभ्यासस्य बहुलम् इकारः भवति "बहुलं छन्दसि" इति सूत्रेण यथा- विवष्टि।



## पाठान्तप्रश्नाः

१. अस्थभिः इति रूपं साधयत।
२. ततुरिः इति रूपं साधयत।
३. उत्तभितम् इति रूपं साधयत।
४. प्रमिणन्ति इति रूपं साधयत।
५. अक्षाः इति रूपं साधयत।
६. अवीवृधत् इति रूपं साधयत।
७. "विभाषा छन्दसि" इति सूत्रं व्याख्यात।



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तरकूटः-१**

१. आज्जसेरसुक् इति सूत्रेण असुगागमो विधीयते।
२. पादान्तगोशब्दस्य नुडागमः विधीयते।



३. अस्थ्यादीनामनङ्
४. छन्दस्यपि दृश्यते।
५. द्विवचने अजादौ हलादौ च विभक्तौ परे।
६. बहुलं छन्दसि।
७. निष्ठायाम्।
८. अष्टादश।
९. मीञ्- धातोः।
१०. अस्तिसिचः परस्य।
११. अपृक्त एकाल्प्रत्ययः।
१२. नित्यं छन्दसि सूत्रेण छन्दसि विषये चङ्युपधाया ऋवर्णस्य ऋत्वं विधीयते।
१३. रिषण्यति इत्यस्य लौकिकं रूपं रिष्टीयति।

**उत्तरकूटः-२**

१४. "विभाषा छन्दसि" इति सूत्रेण छन्दसि क्त्वाप्रत्यये परे जहातेः विकल्पेन हिः आदेशो विधीयते।
१५. हाधातोः छन्दसि क्त्वाप्रत्यये त्रीणि रूपाणि भवन्ति। हित्वा, हीत्वा, हात्वा चेति।
१६. सुधितम् इत्यत्र धाधातोः इत्वं निपातनात् भवति।
१७. धिषीय इति आशार्लिङ्-लकारे रूपम्।
१८. छन्दसि सूधातोः लिटि प्रथमपुरुषैकवचने ससूव इति रूपम्।
१९. वश्-धातोः लिटि अभ्यासस्य इकारः "बहुलं छन्दसि" इति सूत्रेण भवति।

## इति द्वाविंशः पाठः



२३

# अष्टाध्याय्याः अष्टमः अध्यायः-१

## प्रस्तावना

अस्मिन् पाठे नुड्विधानविषये नैकानि सूत्राणि आलोचयिष्यन्ते। तत्र कस्मात् शब्दात् कदा नुट् भवति, कथं वा प्रक्रिया इति विषये सविस्तरं व्याख्यानम् करिष्यते। ततः भुवः प्रातिपदिकात् रेफविधानम् रुविधानम् चेति द्वयोः विषययोः एव वैकल्पिकविधानविषये आलोचना विधास्यते। अपि च ओमभ्यादाने इत्यादिसूत्रेषु वेदे कथं स्वरविधानं भवति इति विषयोऽपि स्पष्टीकरिष्यते। पाठेऽस्मिन् आलोचयिष्यमाणानाम् प्रत्ययानाम् केषु अर्थेषु प्रयोगः इत्यपि प्रदर्शयिष्यते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान्-

- नुडादिविधानविषये स्पष्टं ज्ञानम् अर्जयेत्।
- वेदे स्वरविधानस्य प्रक्रियां ज्ञास्यति।
- वेदे विभिन्नेभ्यः प्रातिपदिकेभ्यः के प्रत्ययाः भवन्तीति ज्ञास्यति।
- केषु अर्थेषु प्रातिपदिकेभ्यः प्रत्ययाः भवन्तीति ज्ञास्यति।

## २३.१) प्रसमुपोदः पादपूरणे॥ (८.१.६)

**सूत्रार्थः** - एषां द्वे स्तः पादपूरणे।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण द्वित्वं विधीयते। अस्मिन् सूत्रे पदद्वयम् अस्ति। प्रसमुपोदः इति षष्ठ्यन्तम् पदम्। पादपूरणे इति सप्तम्यन्तं पदम्। "सर्वस्य द्वे" इति सूत्रात् द्वे इति पदम् अनुवर्तते। सूत्रार्थो हि प्र, सम्, उप, उद् इत्येतेषां पादपूरणे द्वित्वं भवति इति। अत्र छन्दसि इति पदं नास्ति तथापि लोके प्र इत्यादीनां द्वित्वं न दृश्यते, अतः छन्दसि एव एतत् कार्यं भवति इति बोद्धव्यम्। लोके तु अधः परि उपरि इत्येतेषामेव द्विरुक्तिः दृश्यते।

**उदाहरणम्** - प्रप्रायमग्निर्भरतस्य शृण्वे। संसमि द्युवसे वृषन्। उपोप मे परामृश। किं नोदुदु हर्षसे।

**सूत्रार्थसमन्वयः** - प्रप्रायमित्यादिमन्त्रे त्रिष्टुप्-छन्दः अस्ति। तत्कृते च एकादश अक्षराणि अपेक्षितानि। अत्र प्र इत्यस्य द्वित्वे कृते सा संख्या पूरिता। एवं संसमि द्युवसे इत्यादिमन्त्रे

गायत्रीछन्दस्त्वात् अष्टौ अक्षराणि अपेक्षितानि। सम् इत्यस्य द्वित्वे कृते सा संख्या पूरिता। एवम् उपोप मे परामृश इति नोदुदु हर्षसो इति च।

## २३.२) छन्दसीरः॥ (८.२.१५)

**सूत्रार्थः** - इवर्णान्ताद्रेफान्ताच्च परस्य मतोर्मस्य वः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण छन्दसि इवर्णान्तात् रेफान्तात् च परस्य मतुपः मकारस्य वकारः विधीयते। अस्मिन् सूत्रे पदद्वयम् अस्ति। छन्दसि इति सप्तम्यन्तं पदम्। इरः इति पञ्चम्यन्तं पदम्। "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इति सूत्रात् मतोः, वः इति पदद्वयम् अनुवर्तते। "पदस्य" इत्यनुवर्तते। तच्च पदात् इति पञ्चम्यन्ततया विपरिणमते। इरः इत्यस्य पदात् इत्यस्य विशेषणत्वात् तदन्तविधिः भवति। तेन इवर्णान्तात् रेफान्तात् इत्यर्थलाभः। अतः सूत्रार्थः भवति इवर्णान्तात् रेफान्ताच्च परस्य मतुप्प्रत्ययस्य मकारस्य वकारः स्यात् इति।

**उदाहरणम्** - हरिवते हर्यश्वाय। गीर्वान्।

**सूत्रार्थसमन्वयः** - हरयः विद्यन्ते यस्य इति विग्रहे हरि जस् इति प्रथमान्तप्रातिपदिकात् मतुप्प्रत्यये हरि जस् मत् इति स्थिते समुदायस्य तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इति सूत्रेण सुब्लुकि हरि मत् इति स्थिते प्रकृतसूत्रेण इकारान्तात् हरिशब्दात्परस्य मतुपः मकारस्य वकारे हरिवत् इति जाते प्रातिपदिकत्वाक्षत्या चतुर्थ्येकवचने ङेविभक्तौ **हरिवते** इति रूपम्।

गीः अस्ति अस्य इति विग्रहे गिर् सु इति प्रथमान्तप्रातिपदिकात् मतुप्प्रत्यये गिर् सु मत् इति स्थिते समुदायस्य तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इति सूत्रेण सुब्लुकि गिर् मत् इति जाते प्रकृतसूत्रेण रेफान्तात् गिर्-शब्दात्परस्य मतुप्प्रत्ययस्य मकारस्य वकारे गिर्वत् इति जाते "र्वोरुपधाया दीर्घ इकः" इति सूत्रेण उपधायाः इकः दीर्घे गीर्वत् इति जाते प्रातिपदिकत्वाक्षत्या प्रथमैकवचने **गीर्वान्** इति रूपम्।

## २३.३) अनो नुट्॥ (८.२.१६)

**सूत्रार्थः** - अन्नन्तान्मतोर्नुट् स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण अन्नन्तात् मतोः नुट् विधीयते। अस्मिन् सूत्रे पदद्वयम् अस्ति। अनः इति पञ्चम्यन्तं पदम्। नुट् इति प्रथमान्तं पदम्। "छन्दसीरः" इति सूत्रात् छन्दसि इति पदम् अनुवर्तते। "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इति सूत्रात् मतोः इति पदम् अनुवर्तते। सूत्रमिदं "पदस्य" इत्यधिकारे पठितम्। तच्च पञ्चम्यन्ततया विपरिणमते। तस्य च अन् इति विशेषणम्। विशेषणत्वात् तदन्तविधिः भवति। तेन अन्नन्तात् इत्यर्थलाभः। अतः सूत्रार्थः भवति अन्नन्तात् परस्य मतुप्प्रत्ययस्य नुडागमः स्यात् इति। टित्त्वात् नुट् "आद्यन्तौ टकितौ" इति परिभाषया मतुप्प्रत्ययस्य आद्यावयवः भवति।

**उदाहरणम्** - अक्षण्वन्तः। कर्णवन्तः। अस्थण्वतं यदनस्था।



**सूत्रार्थसमन्वयः** - अक्षिणी स्तः अस्य इति विग्रहे अक्षि औ इति प्रथमान्तात् मतुप्प्रत्यये प्रक्रियया अक्षि मत् इति स्थिते ङिच्च इति परिभाषया परिष्कृतेन "छन्दस्यपि दृश्यते" इति सूत्रेण इकारस्य अनङादेशे अक्षन् मत् इति स्थिते प्रकृतसूत्रेण मतुपः नुडागमे अनुबन्धलोपे अक्षन् न् मत् इति जाते "न लोपः प्रातिपदिकान्तस्य" इति सूत्रेण अक्षन् इत्यस्य नकारस्य लोपे "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इति सूत्रेण मतुपः मकारस्य वकारे "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति सूत्रेण नकारस्य णत्वे अक्षण्वत् इति जाते प्रथमाबहुवचनविवक्षायां जसि **अक्षण्वतः** इति रूपम्।

अस्थि अस्ति अस्य इत्यर्थे अस्थि सु इति प्रथमान्तात् मतुप्प्रत्यये प्रक्रियया अस्थि मत् इति स्थिते ङिच्च इति परिभाषया परिष्कृतेन छन्दस्यपि दृश्यते इति सूत्रेण इकारस्य अनङादेशे अस्थन् मत् इति स्थिते प्रकृतसूत्रेण मतुपः नुडागमे अनुबन्धलोपे अस्थन् न् मत् इति जाते नलोपः प्रातिपदिकान्तस्य इति सूत्रेण अस्थन् इत्यस्य नकारस्य लोपे मादुपधायाश्च मतोर्वोऽयवादिभ्यः इति सूत्रेण मतुपः मकारस्य वकारे अस्थन्वत् इति जाते अम्-विभक्तौ **अस्थन्वतम्** इति रूपम्।

## २३.४) नाद्घस्य॥ (८.२.१७)

**सूत्रार्थः** - नान्तात्परस्य घस्य नुट्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण नान्तात्परस्य घस्य नुडागमः विधीयते। अस्मिन् सूत्रे पदद्वयम् अस्ति। नाद् इति पञ्चम्यन्तं पदम्। घस्य इति षष्ठ्यन्तं पदम्। "तरप्तमपौ घः" इति सूत्रेण तरप्प्रत्ययस्य तमप्प्रत्ययस्य च घसंज्ञा। "छन्दसीरः" इति सूत्रात् छन्दसि इति पदम् अनुवर्तते। "अनो नुट्" इति सूत्रात् नुट् इति पदम् अनुवर्तते। पदस्य इत्यधिकृतम्। तच्च पदात् इति पञ्चम्यन्ततया विपरिणमते। नाद् इत्यस्य पदात् इत्यस्य विशेणत्वात् तदन्तविधिः भवति। तेन नान्तात् इत्यर्थलाभः। अतः सूत्रार्थः भवति नान्तात्परस्य घस्य नुडागमः स्यात् इति। टित्त्वात् नुट् आद्यन्तौ टकितौ इति सूत्रेण घस्य आद्यावयवः भवति।

**उदाहरणम्** - सुपथिन्तरः।

**सूत्रार्थसमन्वयः** - सुपथिन्-शब्दात् "द्विवचनविभज्योपपदे" इति सूत्रेण तरप्प्रत्यये प्रकृतसूत्रेण तरपः नुडागमे आद्यावयवे अनुबन्धलोपे सुपथिन् न् तर इति जाते "नलोपः प्रातिपदिकान्तस्य" इति सूत्रेण सुपथिन् इत्यस्य़ नकारस्य लोपे सुपथिन् तर इति जाते नकारस्य अनुस्वारे अनुस्वारस्य च परसवर्णे सुपथिन्तर इति जाते सुविभक्तौ **सुपथिन्तरः** इति रूपं भवति।

## २३.५) नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि॥ (८.२.६१)

**सूत्रार्थः** - सदेर्नञ्पूर्वान्निपूर्वाच्च निष्ठायां नत्वाभावो निपात्यते।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अस्मिन् सूत्रे पदद्वयम् अस्ति। नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि इति प्रथमान्तं पदम्। छन्दसि इति सप्तम्यन्तं पदम्। सूत्रेणानेन छन्दसि नसत्त निषत्त अनुत्त प्रतूर्त सूर्त गूर्त इत्येतानि निपात्यन्ते।

**उदाहरणम्** - नसत्तमञ्जसा। निषत्तमस्य चरतः।



**सूत्रार्थसमन्वयः** - नञ्पूर्वक-सद्-धातोः क्तप्रत्यये प्रक्रियादशायां "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति सूत्रेण क्तप्रत्ययस्य तकारस्य नकारे प्राप्ते अनेन सूत्रेण नत्वाभावः निपात्यते। तेन **नसत्तम्** इति रूपं भवति। लोके तु **असन्नम्** इति भवति। एवं निपूर्वकसद्धातोः क्तप्रत्यये वेदे **निषत्तम्** इति रूपम्। लोके तु **निषण्णम्** इति भवति। नञ्पूर्वकनुद्धातोः क्तप्रत्यये वेदे **अनुत्तम्** इति रूपम्। लोके तु **अनुन्नम्** इति रूपम्। प्रपूर्वकात् त्वर्-धातोः तुर्वीधातोः वा क्तप्रत्यये वेदे **प्रतूर्तम्** इति रूपम्। लोके तु **प्रतूर्णम्** इति रूपम्। सृधातोः क्तप्रत्यये वेदे **सूर्तः** इति रूपम्। लोके **सृतम्** इति रूपम्। गूरीधातोः क्तप्रत्यये वेदे **गूर्तम्** इति रूपम्। लोके तु **गूर्णम्** इति रूपम्।

## २३.६) अम्नरूधरवरित्युभयथा छन्दसि॥ (८.२.७०)

**सूत्रार्थः** - रुर्वा रेफो वा।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण रुः रेफो वा विधीयते। अस्मिन् सूत्रे चत्वारि पदानि सन्ति। अम्नरूधरवः इति प्रथमान्तं पदम्। इति, उभयथा इत्युभयम् अव्ययम्। छन्दसि इति सप्तम्यन्तं पदम्। "रोऽसुपि" इति सूत्रात् रः इति पदम् अनुवर्तते। "ससजुषो रुः" इति सूत्रात् रुः इत्यनुवर्तते। अम्नर् ऊधर् अवर् इत्यत्र अम्नस् ऊधस् अवस् इति पदानां रुत्वं कृत्वा निर्देशः कृतः। उभयथा इति ग्रहणेन रुत्वाभावोऽपि भवति इति बोद्धव्यम्। तेन विकल्पेन रेफोऽपि भवति। अतः सूत्रार्थः भवति अम्नस् ऊधस् अवस् इत्येतेषां सकारस्य छन्दसि विकल्पेन रुः भवति पक्षे रेफः भवति इति। अम्नस्शब्दः ईषदर्थे। अवः इत्यस्य रक्षणम् इत्यर्थः।

**उदाहरणम्** - अम्न एव। अम्नरेव। ऊध एव। ऊधरेव। अव एव। अवरेव।

**सूत्रार्थसमन्वयः** - अम्नस् एव इति स्थिते प्रकृतसूत्रेण सस्य रुत्वे अम्नर् एव इति जाते "भो भगो अघो अपूर्वस्य योऽशि" इति सूत्रेण रोः यकारादेशे अम्नय् एव इति जाते "लोपः शाकल्यस्य" इति सूत्रेण यकारस्य लोपे **अम्न एव** इति रूपम्। पक्षे अम्नस् एव इति स्थिते प्रकृतसूत्रेण सकारस्य रेफे **अम्नरेव** इति रूपम्।

एवम् ऊधस् एव इति स्थिते रुत्वपक्षे **ऊधरेव** इति रूपम्। रेफपक्षे **ऊध एव** इति रूपम्। एवमपि अवस् एव इति स्थिते रुत्वपक्षे **अव एव** इति रूपम्। रेफपक्षे च **अवरेव** इति रूपम्।

## २३.७) भुवश्च महाव्याहृतेः॥ (८.२.७१)

**सूत्रार्थः** - भुवस् इत्येतस्य महाव्याहृतेः छन्दसि विषये उभयथा भवति रुर्वा रेफो वा।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण महाव्याहृतेः भुवस् इत्यस्य सकारस्य रुत्वं रेफो वा विधीयते। अस्मिन् सूत्रे पदत्रयम् अस्ति। भुवः इति षष्ठीप्रतिरूपकम् अव्ययपदम्। च इत्यव्ययपदम्। महाव्याहृतेः इति षष्ठ्यन्तं पदम्। तिस्रः महाव्याहृतयः। ताश्च भूः, भुवः, स्वः चेति। अस्मिन् सूत्रे भुवस्शब्दस्य ग्रहणात् मध्यमायाः ग्रहणम्। भुवः इत्यस्य अन्तरिक्षम् इत्यर्थः। "अम्नरूधरवरित्युभयथा छन्दसि" इति सूत्रात् इति, उभयथा, छन्दसि चेति पदत्रयम् अनुवर्तते। "रोऽसुपि" इति सूत्रात् रः इति पदम् अनुवर्तते। "ससजुषो रुः" इति सूत्रात् रुः इत्यनुवर्तते। सूत्रमिदं "पदस्य" इत्यधिकारे पठितम्।



अलोऽन्त्यस्य इति परिभाषा अत्र प्रवर्तते। सूत्रार्थः भवति छन्दसि विषये भुवस् इति महाव्याहृतेः सकारस्य रुः भवति रेफो वा।

**उदाहरणम्** - भुव इत्यन्तरिक्षम्, भुवरित्यन्तरिक्षम्।

**सूत्रार्थसमन्वयः** - भुवस् इति इत्यवस्थायां प्रकृतसूत्रेण रुत्वे भुवर् इति इति जाते "भो भगो अघो अपूर्वस्य योऽशि" इति सूत्रेण रोः यकारादेशे भुवय् इति इति जाते "लोपः शाकल्यस्य" इति सूत्रेण यकारस्य लोपे **भुव इति** इति रूपम्। पक्षे भुवस् इति इत्यवस्थायां प्रकृतसूत्रेण सकारस्य रेफे **भुवरिति** इत्यपि रूपम्।

**विशेषः-** प्रकृतसूत्रेण भुवस् इति महाव्याहृतेः एव सकारस्य रुत्वं रेफो वा भवति। महाव्याहृतिभिन्नस्य भुवस्-शब्दस्य सस्य रुत्वं रेफो वा न भवति। तत् प्रकृतसूत्रे महाव्याहृतेः इति पदग्रहणादेव ज्ञायते। यथा "भुवो विश्वेषु सवनेषु" इति मन्त्रे भुवः इति तिङन्तं पदं न तु महाव्याहृतिसंज्ञकः। अतः अत्र भुवस् इत्यस्य सकारस्य प्रकृतसूत्रेण रुत्वं विसर्गो वा न भवति। तथाहि भूधातोः "छन्दसि लुङ्लङ्लिटः" इति सूत्रेण वर्तमाने लङि सिपि शपि छान्दस्त्वात् गुणाभावे भू अ सि इति जाते उवङादेशे भुवसि इति जाते इतश्च इति सूत्रेण सकारोत्तरस्येकारस्य लोपे भुवस् इति जाते सकारस्य "ससजुषो रुः" इति सूत्रेण रुत्वे विसर्गे **भुवः इति** इति रूपम्।

## २३.८) ओमभ्यादाने॥ (८.२.८७)

**सूत्रार्थः** - ओम्शब्दस्य प्लुतः स्यादारम्भे।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण ओम्-शब्दस्य प्लुतः विधीयते। अस्मिन् सूत्रे पदद्वयम् अस्ति। ओम् इति प्रथमान्तं पदम्। अभ्यादाने इति सप्तम्यन्तं पदम्। "वाक्यस्य टेः प्लुत उदात्तः" इति सूत्रात् प्लुतः इति पदम् अनुवर्तते। अभ्यादाने ओम् प्लुतः इति। अभ्यादनं नाम प्रारम्भः। ननु कस्य प्रारम्भः इति चेत् उच्यते - स्वाध्यायादेः मन्त्रस्य वा। ओम्शब्दस्य प्लुतः स्याद् आरम्भे इति सूत्रार्थः। अचश्च इति सूत्रेण ओम् इत्यस्य ओकारस्यैव प्लुतः स्यात् इति बोद्धव्यम्। त्रिमात्रिकस्य अचः प्लुतसंज्ञा भवति। तदुक्तम्-

"एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनञ्चार्धमात्रकम्॥" इति॥

**उदाहरणम्** - ओ३म् अग्निमीळे पुरोहितम्।

**सूत्रार्थसमन्वयः** - ऋग्वेदीयम् अग्निसूक्तम् "अग्निमीळे पुरोहितम्" इत्यादिना आरभते। अतः तत्पूर्ववर्तित्वात् ओम् इत्यस्य ओकारस्य प्लुतः भवति प्रकृतसूत्रेण।

**विशेषः-** यत्र मन्त्रस्य प्रारम्भे ओम्शब्दः न तिष्ठति तत्र प्लुतः न भवति। यथा ओमित्येकाक्षरम् इत्यत्र श्लोकस्य आदौ ओम्शब्दः अस्ति। अतः अत्र न प्लुतः।





## पाठगतप्रश्नाः-१

१. प्र सम् उप उत् एतेषां द्वित्वं कदा भवति।

२. छन्दसि इवर्णन्तात् रेफान्ताच्च मतेर्मस्य वः केन सूत्रेण भवति।

३. अक्षण्वन्तः इत्यत्र नुडागमः केन सूत्रेण भवति।

४. "नाद्धस्य" इति सूत्रेण किं विधीयते।

५. अम्नरेव इत्यस्य वैकल्पिकं रूपं किम्।

६. महाव्याहृतयः काः।

७. ओंशब्दस्य प्लुतः कदा भवति।

---

## २३.९) छन्दसि घस्॥ (५.१.१०६)

**सूत्रार्थः** - ऋतुशब्दात् तद् अस्य प्राप्तमित्यर्थे घस्-प्रत्ययः भवति।

**सूत्रव्याख्या** - विधिसूत्रम् इदम्। सूत्रेऽस्मिन् पदद्वयं विराजते। पदच्छेदस्तु स्पष्ट एव। छन्दसि इति सप्तम्यन्तं पदम् अत्र वैषयिकसप्तमी। घस् इति प्रथमान्तं पदम्। समयस्तदस्य प्राप्तम् इति सूत्रात् तत् इति प्रथमान्तं पदम् अस्य इति षष्ठ्यन्तं पदम्, प्राप्तम् इति प्रथमान्तं पदञ्च अनुवर्तन्ते। ऋतोरण् इत्यतः ऋतोः इति पञ्चम्यन्तं पदम् अनुवर्तते। प्रत्ययः परश्च इति सूत्रे अधिक्रियेते। ततश्च सूत्रार्थो भवति तत् अस्य अस्ति इत्यर्थे ऋतुशब्दात् परं घस्प्रत्ययो भवति छन्दसि विषये। ऋतोरण् इति सूत्रस्य अपवादः अयम्।

**उदाहरणम्** - भाग ऋत्वियः।

**सूत्रार्थसमन्वयः** - तदस्य अस्ति इत्यर्थे ऋतुशब्दात् ऋतोरण् इति अणि प्राप्ते तं प्रबाध्य प्रकृतसूत्रेण घस्प्रत्यये सकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायां तस्य लोपः इति लोपे च कृते ऋतु घ इति स्थिते घसः सित्त्वात् सिति च इति सूत्रेण पदसंज्ञायां पदसंज्ञायाः घसंज्ञापवादत्वात् ओर्गुणः इति गुणे अप्राप्ते इको यणचि इति सूत्रेण उकारस्य यणादेशे वकारे ऋत् व् घ इति स्थिते घकारस्य स्थाने अनेकाल् शित् सर्वस्य इति परिभाषया परिष्कृतेन आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् इति सूत्रेण इयादेशे ऋत् व इय् अ इति स्थिते सर्ववर्णसम्मेलने ऋत्विय इति स्थिते समुदायस्य कृत्तद्धितसमासाश्च इति सूत्रेण प्रातिपदिकसंज्ञायां स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमपुरूषैकवचनविवक्षायां सौ उकारस्य उपदेशेऽजनुनासिक इत् इति सूत्रेण उकारस्य इत्संज्ञायां तस्य लोपः इति लोपे ऋत्विय स् इति स्थिते सस्य स्थाने ससजुषो रुः इति रुत्वेऽनुबन्धलोपे ऋत्विय र् इति जाते रेफस्य स्थाने खरवसानयोर्विसर्जनीयः इति सूत्रेण विसर्गे ऋत्वियः इति रूपं सिद्धम्।



## २३.१०) मये च (४.४.१३८)

**सूत्रार्थः** - सोमशब्दाद्यः स्यान्मयडर्थे।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। सूत्रेऽस्मिन् पदद्वयं विराजते। मये इति सप्तम्यन्तं पदम्। च इति अव्ययपदम्। सोममर्हति यः इति सूत्रात् सोमम् इति यः इति च पदम् अनुवर्तेते, सोमम् इति पदं पञ्चम्यन्ततया विपरिणमते। तेन च सोमात् इति लभ्यते। भवे छन्दसि इति सूत्रात् छन्दसि इति सप्तम्यन्तं पदम् अनुवर्तते। तद्धिताः इति ङ्याप्प्रातिपदिकात् इति प्रत्ययः इति परश्च इति च सूत्राणि अधिकृतानि। छन्दसि इति वैषयिकसप्तमी। ततश्च सूत्रार्थो भवति- छन्दसि विषये सोमशब्दात् यप्रत्ययः भवति। मयटः आगतविकारावयाप्रकृताः अर्थाः।

**सूत्रार्थसमन्वयः** - सोम्यं मधु।

**उदाहरणम्** - सोमशब्दात् तद्धितसंज्ञकमयडर्थके यप्रत्यये सोम य इति स्थिते मकारोत्तरस्य अकारस्य लोपे सोम्य इति स्थिते समुदायस्य तद्धितान्तत्वात् कृत्तद्धितसमासाश्च इत्यनेन तस्य प्रातिपदिकसंज्ञायां ततश्च ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सौ सोः स्थाने अतोऽम् इति सूत्रेण अमादेशे अमि पूर्वः इति पूर्वरूपे एकादेशे सोम्यम् इति रूपं सिद्ध्यति।

## २३.११) विचार्यमाणानाम्।।(८.२.९७)

**सूत्रार्थः**- वाक्यानां टेः प्लुतः।

**सूत्रावतरणम्**- वेदे विचार्यमाणानां वाक्यानां टिभागस्य प्लुतविधानार्थं सूत्रमिदं प्रणीतमाचार्येण।

**सूत्रव्याख्या**- विधिसूत्रमिदम्। अनेन सूत्रेण विचार्यमाणानां वाक्यानां टिभागस्य प्लुतविधानं भवति। अस्मिन् सूत्रे एकमेव पदं वर्तते। तत्र विचार्यमाणानाम् इति षष्ठीबहुवचनान्तं पदम्। अत्र वाक्यस्य टेः प्लुत उदात्तः इति सूत्रात् टेः इति षष्ठ्येकवचनान्तं पदम्, प्लुतः इति प्रथमैकवचनान्तं च पदम् अनुवर्तेते। अत्र वाक्यस्य इति अनुवर्तमानस्य पदस्य विभक्तिविपरिणामेन वाक्यानाम् इति रूपं भवति। पदयोजना- विचार्यमाणानां वाक्यानां टेः प्लुतः इति। तेन अत्र सूत्रार्थो भवति- विचार्यमाणानां वाक्यानां टिभागस्य प्लुतः स्वरो भवतीति।

**उदाहरणम्**- होतव्यं दीक्षितस्य गृहा३ इ इति।

**सूत्रार्थसमन्वयः**- होतव्यं दीक्षितस्य गृहा३ इ इत्यस्मिन् वाक्ये गृहे (गृह इ) इति स्थिते प्रकृतसूत्रसहकृतेन एचोऽप्रगृहस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ इति सूत्रेण गृह- शब्दस्य अकारस्य स्थाने प्लुते आ३कारे गृहा३ इति जाते ततश्च दूराद्धूते च इति सूत्रेण तत्र सन्ध्यभावे गृहा३ इ इति रूपं सिध्यति।

एवं होतव्यम् अथवा न होतव्यम् इत्यादौ विचार्यमाणे वाक्ये प्रकृतसूत्रेण प्लुतः स्वरः भवति।

## २३.१२) नित्यं छन्दसि (४.१.४६)

**सूत्रार्थः-** बह्वादिभ्यः छन्दसि विषये नित्यं ङीष्।

**सूत्रावतरणम्-** लोके बह्वादिभ्यश्च इति सूत्रेण बह्वादिभ्यः विकल्पेन ङीष्- प्रत्ययो भवति। वेदे तु बह्वादिभ्यः ङीष्- प्रत्ययस्य नित्यं विधानार्थं सूत्रमिदं प्रणीतम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन सूत्रेण वेदे बह्वादिभ्यः नित्यं ङीष्- प्रत्ययो विधीयते। द्विपदात्मके अस्मिन् सूत्रे नित्यम् इति प्रथमान्तं पदम्, छन्दसि इति च विषयसप्तम्यन्तं पदम्। अस्मिन् सूत्रे अन्यतो ङीष् इति सूत्रात् ङीष् इति प्रथमान्तं प्रत्ययबोधकं पदम् अनुवर्तते। ङ्याप्प्रातिपदिकात् इति सूत्रात् अनुवर्तमानं प्रातिपदिकात् इति पञ्चम्यन्तं पदमत्र वचनविपरिणामेन प्रातिपदिकेभ्यः इति रूपं लभते। अनुपसर्जनात् इति पदस्यात्र वचनविपरिणामेन अनुपसर्जनेभ्यः इति रूपं भवति। स्त्रियाम्, प्रत्ययः परश्च चेति पदत्रयमत्र अधिकृतम्। एवञ्च अत्र पदयोजना- छन्दसि अनुपसर्जनेभ्यः बह्वादिभ्यः प्रातिपदिकेभ्यः परः नित्यं ङीष् प्रत्ययः स्त्रियाम् इति। सूत्रार्थः भवति- छन्दसि विषये बह्वादिभ्यः अनुपसर्जनेभ्यः प्रातिपदिकेभ्यः स्त्रियां नित्यं ङीष् प्रत्ययः स्यात् इति।

**उदाहरणम्-** बह्वी।

**सूत्रार्थसमन्वयः-** बह्वादिगणे पठितस्य बहु इति शब्दस्य अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इत्यनेन सूत्रेण प्रातिपदिकसंज्ञायां प्रकृतसूत्रेण ङीष्-प्रत्यये ङीष्-प्रत्ययादेः ङकारस्य लशक्वतद्धिते इति सूत्रेण इत्संज्ञायाम्, षकारस्य च हलन्त्यम् इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण उभयोः षकारङकारयोः लोपे बहु ई इति स्थिते उकारस्य स्थाने इको यणचि इति सूत्रेण यणादेशे वकारे बह्वी इति जाते तस्य बह्वी-शब्दस्य ङ्यन्तत्वात् ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सुप्रत्यये बह्वी सु इति स्थिते अनुनासिकत्वेन पाणिनीयैः प्रतिज्ञातस्य सुप्रत्ययान्त्यस्य उकारस्य उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञायां तस्य लोपः इत्यनेन च तस्य इत्संज्ञकस्य उकारस्य लोपे बह्वी स् इति जाते हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रेण ङ्यन्तात् परस्य सकारस्य लोपे **बह्वी** इति रूपं सिध्यति।

## २३.१३) मायायामण् (४.४.१२४)

**सूत्रार्थः-** असुरशब्दात्षष्ठीसमर्थात् 'मायायाम्' स्वविशेषणे अण्-प्रत्ययो भवति।

**सूत्रावतरणम्-** असुरप्रातिपदिकात् मायार्थे अण-प्रत्ययविधानार्थं सूत्रमिदम्।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन अण-प्रत्ययो विधीयते। द्विपदात्मके अस्मिन् सूत्रे मायायाम् इति सप्तम्यन्तं पदम्, अण् इति च प्रथमान्तं पदम्। अत्र असुरस्य स्वम् इति सूत्रात् असुरस्य इति षष्ठ्यन्तं पदम्, स्वम् इति प्रथमान्तं च पदम्, भवे छन्दसि इति सूत्रात् छन्दसि इति विषयसप्तम्यन्तं पदम्, अग्राद्यत् इति सूत्रात् यत् इति प्रथमान्तं पदम्, ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् इति पञ्चम्यन्तं पदं च अनुवर्तन्ते। तद्धिताः, प्रत्ययः, परश्च चेति पदत्रयम् अत्र अधिकृतम्। अस्मिन् सूत्रे असुरस्य इति षष्ठ्यन्तं पदमत्र असुरात् इति पञ्चम्येकवचनान्ततया विपरिणमते। एवञ्च अत्र पदयोजना-



छन्दसि असुरात् प्रातिपदिकात् परः मायायाम् अण्-प्रत्ययः इति। एवञ्च अत्र सूत्रार्थो भवति - छन्दसि विषये मायार्थे असुरप्रातिपदिकात् अण्-प्रत्ययः परः स्यात् इति।

**उदाहरणम्-** आसुरी माया।

**सूत्रार्थसमन्वयः-** असुर-शब्दस्य अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इति सूत्रेण प्रातिपदिकसंज्ञायां मीयते अनया इति माया असदर्थप्रकाशनशक्तिः। तस्यां वाच्यायाम् असुरप्रातिपदिकात् प्रकृतसूत्रेण अण्-प्रत्यये असुर अण् इति जाते अण्-प्रत्ययान्त्यस्य णकारस्य हलन्त्यम् इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण च तस्य लोपे असुर अ इति जाते तद्धितेष्वचामादेः इति सूत्रेण च असुरशब्दस्य आदेः अकारस्य वृद्धौ आकारे आसुर अ इति जाते यचि भम् इति सूत्रेण आसुरशब्दस्य भसंज्ञायां यस्येति च इति सूत्रेण च आसुर इत्यस्य अन्त्यस्य अकारस्य लोपे आसुर् अ इति जाते सर्ववर्णसम्मेलने आसुर इति जाते अण्- प्रत्ययान्तत्वात् आसुर-शब्दस्य स्त्रीत्वविवक्षायां ततः टिड्ढाणञ्-द्वयसज्-दघ्नञ्-मात्रच्-तयप्-ठक्-ठञ्-कञ्-क्वरपः इति सूत्रेण ङीप्-प्रत्यये ङीप्-प्रत्ययादेः ङकारस्य लशक्वतद्धिते इति सूत्रेण इत्संज्ञायाम्, पकारस्य च हलन्त्यम् इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण पकारङकारयोः लोपे आसुर ई इति जाते आसुर-शब्दस्य यचि भम् इति सूत्रेण भसंज्ञायां तदन्त्यस्य च अकारस्य यस्येति च इति सूत्रेण लोपे सर्ववर्णसम्मेलने च आसुरी इति जाते तस्य ङ्यन्तत्वात् ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सुप्रत्यये आसुरी सु इति स्थिते अनुनासिकत्वेन पाणिनीयैः प्रतिज्ञातस्य सुप्रत्ययान्त्यस्य उकारस्य उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञायां तस्य लोपः इत्यनेन च तस्य इत्संज्ञकस्य उकारस्य लोपे आसुरी स् इति जाते हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् इति सूत्रेण ङ्यन्तात् परस्य सकारस्य लोपे **आसुरी** इति रूपं सिध्यति।

## २३.१४) अश्विमानण् (४.४.१२६)

**सूत्रार्थः-** अश्विमच्छब्दादण् प्रत्ययो भवति।

**सूत्रावतरणम्-** अश्विमच्छब्दात् अण्-प्रत्ययस्य विधानार्थं सूत्रमिदं प्रणीतमाचार्येण।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन अण्-प्रत्ययो विधीयते। द्विपदात्मके अस्मिन् वाक्ये अश्विमान् इति प्रथमैकवचनान्तं पदम्, अण् इत्यपि प्रथमैकवचनान्तं पदम्। भवे छन्दसि इति सूत्रात् अत्र छन्दसि इति विषयसप्तम्यन्तं पदमनुवर्तते, ङ्याप्प्रातिपदिकात् इति सूत्रात् अत्र प्रातिपदिकात् इति पञ्चम्यन्तं पदम् अनुवर्तते। तद्धिताः, प्रत्ययाः, परश्च चेति पदत्रयमत्र अधिकृतम्। तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः इति सूत्रात् अत्र तद्वान् इति प्रथमान्तं पदम्, आसाम् इति षष्ठीबहुवचनान्तं पदम्, उपधानः इति प्रथमान्तं पदम्, मन्त्रे इति सप्तम्येकवचनान्तं पदम्, इति इति अव्ययम्, इष्टकासु इति सप्तमीबहुवचनान्तं पदम्, लुक् इति प्रथमान्तं पदम्, च इति अव्ययम्, मतोः इति षष्ठ्येकवचनान्तं च पदमत्र अनुवर्तन्ते। अत्र मतु-पदेन मतुप्-प्रत्ययः बोध्यः। अत्र पदयोजना च इत्थम् - तद्वानासामुपधानो मन्त्र इतीष्टकासु (वाच्यासु) अश्विमान् प्रातिपदिकात् परः तद्धितः अण् प्रत्ययः छन्दसि मतोः लुक् च

इति। तेन अत्र सूत्रार्थः भवति- तद्वानासामुपधानो मन्त्र इतीष्टकासु (वाच्यासु) छन्दसि विषये अश्विमत्प्रातिपदिकात् अण्-प्रत्ययो भवति, मतुप्- प्रत्ययस्य च लुग् भवति इति।

**उदाहरणम्-** आश्विनीः उपदधाति।

**सूत्रावतरणम्-** अश्वि-शब्दः अस्मिन् मन्त्रे अस्ति इति अश्विमान्। अश्विमत्-प्रातिपदिकात् प्रकृतसूत्रेण अण्-प्रत्यये मतुपश्च लुकि इनण्यनपत्ये इति सूत्रेण प्रकृतिवद्भावे अश्विन् अण् इति स्थिते अण्-प्रत्ययान्त्यस्य णकारस्य लोपे अश्विन् अ इति जाते तद्धितेष्वचामादेः इति सूत्रेण अश्विन्-शब्दस्य आदेः अकारस्य वृद्धौ आकारे आश्विन् अ इति जाते सर्ववर्णसम्मेलनेन निष्पन्नस्य आश्विनशब्दस्य अण्-प्रत्ययान्तत्वात् टिड्-ढाणञ्-द्वयसज्-दघ्नञ्-मात्रच्-तयप्-ठक्-ठञ्-कञ्-क्वरपः इति सूत्रेण ततः ङीप्-प्रत्यये ङीप्-प्रत्ययादेः ङकारस्य लशक्वतद्धिते इति सूत्रेण इत्संज्ञायाम्, पकारस्य च हलन्त्यम् इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण च पकारङकारयोः लोपे आश्विन ई इति जाते आश्विन-शब्दस्य यचि भम् इति सूत्रेण भसंज्ञायां तदन्त्यस्य च अकारस्य यस्येति च इति सूत्रेण लोपे सर्ववर्णसम्मेलनेन च आश्विनी इति जाते तस्य आश्विनीशब्दस्वरूपस्य ङ्यन्तत्वात् ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु द्वितीयाबहुवचनविवक्षायां शस्- प्रत्यये शस्-प्रत्ययादेः शकारस्य लशक्वतद्धिते इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण च तस्य इत्संज्ञकस्य शकारस्य लोपे आश्विनी अस् इति जाते प्रथमयोः पूर्वसवर्णः इति सूत्रेण ईकारस्य अकारस्य च स्थाने पूर्वसवर्णदीर्घे एकादेशे ईकारे आश्विनी स् इति जाते समुदायस्य सुबन्तत्वात् सुप्तिङन्तं पदम् इत्यनेन तस्य पदसंज्ञायां तदन्त्यस्य सकारस्य स्थाने ससजुषो रुः इत्यनेन रु- इत्यादेशे अनुबन्धलोपे च आश्विनी र् इति जाते समुदायस्य अन्त्यस्य रेफस्य स्थाने खरवसानयोर्विसर्जनीयः इत्यनेन विसर्गादेशे सर्ववर्णसम्मेलने **आश्विनीः** इति रूपं सिध्यति।

## २३.१५) समुद्राभ्राद्घः (४.४.११८)

**सूत्रार्थः-** समुद्रशब्दाद् अभ्रशब्दाच्च घः प्रत्ययो भवति, 'तत्र भवः' इत्यस्मिन्नर्थे।

**सूत्रावतरणम्-** वेदे समुद्रशब्दात् अभ्रशब्दाच्च भवे छन्दसि इति सूत्रेण यत्-प्रत्यये प्राप्ते तं बाधित्वा घप्रत्ययविधानार्थं सूत्रमिदं प्रणीतमाचार्येण।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन घ-प्रत्ययो विधीयते। द्विपदात्मके अस्मिन् सूत्रे समुद्राभ्राद् इति पञ्चम्येकवचनान्तं पदम्, घः इति च प्रथमैकवचनान्तं पदम्। समुद्रश्च अभ्रश्च समुद्राभ्रम्, तस्मात् समुद्राभाद् इति समाहारद्वन्द्वः। अस्मिन् सूत्रे भवे छन्दसि इति सूत्रात् भवे इति सप्तम्यन्तं पदम्, छन्दसि इति सप्तम्यन्तं पदम्, तत्र साधुः इति सूत्रात् तत्र इति त्रल्प्रत्ययान्तं पदम्, ङ्याप्प्रातिपदिकात् इति सूत्रात् प्रातिपदिकात् इति पञ्चम्यन्तं पदं च अनुवर्तन्ते। तद्धिताः, प्रत्ययः परश्च चेति पदत्रयमत्र अधिकृतम्। एवमत्र पदयोजना भवति- छन्दसि तत्र भवे समुद्राभ्रात् प्रातिपदिकात् परः घः तद्धितः प्रत्ययः इति। ततश्च सूत्रार्थः भवति- छन्दसि विषये 'तत्र भवः' इत्यस्मिन् अर्थे समुद्रात् अभ्रात् च प्रातिपदिकात् तद्धितः घः प्रत्ययः परः स्यात् इति।



**उदाहरणम्-** समुद्रियाः।

**सूत्रार्थसमन्वयः-** समुद्रशब्दस्य अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इति सूत्रेण प्रातिपदिकसंज्ञायां 'समुद्रे भवः' इति विग्रहे प्रकृतसूत्रेण घप्रत्यये समुद्र घ इति स्थिते आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् इति सूत्रेण घ-प्रत्ययस्य स्थाने इय्-इत्यादेशे समुद्र इय् अ इति स्थिते समुद्रशब्दस्य यचि भम् इति सूत्रेण भसंज्ञायां तदन्त्यस्य च अकारस्य यस्येति च इति सूत्रेण लोपे सर्ववर्णसम्मेलने च समुद्रिय इति जाते अस्य शब्दस्य स्त्रीत्वविवक्षायां ततः अजाद्यतष्टाप् इति सूत्रेण टाप्-प्रत्यये टाप्प्रत्ययाद्यस्य टकारस्य चुटू इति सूत्रेण इत्संज्ञायाम्, पकारस्य च हलन्त्यम् इति सूत्रेण इत्संज्ञायां तस्य लोपः इति सूत्रेण उभयोः टकारपकारयोः लोपे समुद्रिय आ इति जाते सवर्णदीर्घे समुद्रिया इति जाते अस्य शब्दस्य टाप्प्रत्ययान्तत्वात् ततः ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमपुरुषबहुवचनविवक्षायां जसि जस्-प्रत्ययादेः जकारस्य चुटू इति सूत्रेण इत्सज्ञायां तस्य लोपः इति सूत्रेण च तस्य इत्संज्ञकस्य जकारस्य लोपे समुद्रिया अस् इति स्थिते प्रथमयोः पूर्वसवर्णः इति सूत्रेण तयोः आकाराकारयोः स्थाने पूर्वसवर्णदीर्घे एकादेशे आकारे सर्ववर्णसम्मेलनेन च समुद्रियास् इति जाते समुदायस्य सुबन्तत्वात् सुप्तिङन्तं पदम् इत्यनेन तस्य पदसंज्ञायां तदन्त्यस्य सकारस्य स्थाने ससजुषो रुः इत्यनेन रु- इत्यादेशे अनुबन्धलोपे च समुद्रिया र् इति जाते समुदायस्य अन्त्यस्य रेफस्य स्थाने खरवसानयोर्विसर्जनीयः इत्यनेन विसर्गादिशे सर्ववर्णसम्मेलनेन च **समुद्रियाः** इति रूपं सिध्यति।

## २३.१६) पाथोनदीभ्यां ड्यण् (४.४.१११)

**सूत्रार्थः-** पाथःशब्दान्नदीशब्दाच्च ड्यण्-प्रत्ययो भवति 'तत्र भवः' इत्यस्मिन्नर्थे।

**सूत्रावतरणम्-** 'तत्र भवः' इत्यस्मिन्नर्थे पाथश्शब्दात् नदीशब्दाच्च् ड्यण्-प्रत्ययस्य विधानार्थं सूत्रमिदं प्रणीतमाचार्येण।

**सूत्रव्याख्या-** विधिसूत्रमिदम्। अनेन ड्यण्-प्रत्ययो विधीयते। द्विपदात्मके अस्मिन् सूत्रे पाथोनदीभ्याम् इति पञ्चमीद्विवचनान्तं पदम्, ड्यण् इति च प्रथमैकवचनान्तं पदम्। ङ्याप्प्रातिपदिकात् इति सूत्रात् अत्र प्रातिपदिकात् इति पञ्चम्येकवचनान्तं पदम्, भवे छन्दसि इति सूत्रात् भवे छन्दसि चेति सप्तम्येकवचनान्तं पदद्वयं च अनुवर्तन्ते। तद्धिताः, अनुपसर्जनात्, प्रत्ययः परश्च चेति अत्र अधिकृतम्। एवञ्च अत्र पदयोजना- छन्दसि अनुपसर्जनात् पाथोनदीभ्यां प्रतिपदिकात् परः ड्यण् तद्धितः प्रत्ययः इति। अत्र विभक्तिविपरिणामेन अनुपसर्जनाभ्यां प्रातिपदिकाभ्याम् इति रूपं भवति। विभक्तिविपरिणामेन जातं रूपं तद्धितः इति प्रथमैकवचनान्तं पदमत्र ड्यण् इत्यस्य विशेषणम्। सूत्रार्थः भवति- छन्दसि विषये पाथोनदीभ्याम् अनुपसर्जनाभ्यां प्रातिपदिकाभ्यां तद्धितः ड्यण् प्रत्ययो भवति इति। अर्थात् प्रकृतसूत्रेण पाथस्, नदी चेति शब्दाभ्यां प्रकृतसूत्रेण ड्यण् इति परो तद्धितप्रत्ययः विधीयते।

**उदाहरणम्-** पाथ्यः।



**सूत्रार्थसमन्वयः**- पाथस्-इति शब्दस्य अर्थवदधातुरप्रत्ययः प्रातिपदिकम् इति सूत्रेण प्रातिपदिकसंज्ञायां 'पाथसि भवः' इत्यर्थे प्रकृतसूत्रेण ततः ड्यण्-प्रत्यये ड्यण्-प्रत्ययादेः डकारस्य चुटू इति सूत्रेण इत्संज्ञायाम्, हलन्त्यम् इति सूत्रेण च णकारस्य इत्संज्ञायां तस्य लोपः इति सूत्रेण तयोः इत्संज्ञकयोः डकारणकारयोः लोपे पाथस् य इति स्थिते पाथस्-शब्दस्य अस्-भागस्य अचोऽन्त्यादि टि इति सूत्रेण टिसंज्ञायां ड्यण्-प्रत्ययस्य डित्वात् टेः इति सूत्रेण तस्य टिसंज्ञकस्य अस् इत्यस्य लोपे पाथ् य इति स्थिते सर्ववर्णसम्मेलनेन निष्पन्नस्य पाथ्य इति शब्दस्य तद्धितप्रत्ययान्तत्वात् ङ्याप्प्रातिपदिकात्, प्रत्ययः, परश्च चेत्यधिकृत्य प्रवर्तमानेन स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् इति सूत्रेण खले कपोतन्यायेन एकविंशतिस्वादिप्रत्ययेषु प्राप्तेषु प्रथमैकवचनविवक्षायां सुप्रत्यये पाथ्य सु इति स्थिते अनुनासिकत्वेन पाणिनीयैः प्रतिज्ञातस्य सुप्रत्ययान्त्यस्य उकारस्य उपदेशेऽजनुनासिक इत् इति सूत्रेण इत्संज्ञायां तस्य लोपः इत्यनेन च तस्य इत्संज्ञकस्य उकारस्य लोपे पाथ्य स् इति जाते समुदायस्य सुबन्तत्वात् सुप्तिङन्तं पदम् इत्यनेन तस्य पदसंज्ञायां तदन्त्यस्य सकारस्य स्थाने ससजुषो रुः इत्यनेन रु इत्यादेशे अनुबन्धलोपे च पाथ्य र् इति जाते समुदायस्य अन्त्यस्य रेफस्य स्थाने खरवसानयोर्विसर्जनीयः इत्यनेन विसर्गादेशे सर्ववर्णसम्मेलनेन च **पाथ्यः** इति रूपं सिध्यति।



## पाठगतप्रश्नाः-२

८. छन्दसि घस् इति सूत्रेण कः प्रत्ययः विधीयते।
९. छन्दसि घस् इति सूत्रे ऋतोः इति पदं कुतः अनुवर्तते।
१०. छन्दसि घस् इति सूत्रं कस्य अपवादः।
११. सोमशब्दात् यप्रत्ययः केन भवति।
१२. सोमशब्दात् यप्रत्ययः कस्मिन् अर्थे भवति।
१३. मयडर्थाः के।
१४. विचार्यमाणानां वाक्यानां टेः प्लुतः केन सूत्रेण भवति।
१५. बह्वादिभ्यः नित्यं ङीष् केन सूत्रेण भवति।
१६. असुरशब्दात् अण्- प्रत्ययः केन सूत्रेण भवति।
१७. अश्विमच्छब्दात् अण्- प्रत्ययः केन सूत्रेण भवति।
१८. समुद्रशब्दात् अभ्रशब्दाच्च केन सूत्रेण घ- प्रत्ययः।
१९. पाथश्शब्दात् नदीशब्दाच्च केन सूत्रेण ड्यण्- प्रत्ययः।





## पाठसारः

छन्दसि पादपूरणे प्र, सम्, उप, उत् इत्येतेषां द्वित्वं भवति। "छन्दसीरः" इवर्णान्ताद्रेफान्ताच्च परस्य मतोर्मस्य वः भवति। "अनो नुट्" इति सूत्रेण अन्नन्तान्मतोर्नुट् भवति। नान्तात्परस्य घस्य नुडागमः भवति "नाद्घस्य" इति सूत्रेण। छन्दसि विषये भुवस् इति महाव्याहृतेः सकारस्य रुः भवति रेफो वा।शब्दस्य प्लुतः भवति आरम्भे। विचार्यमाणानाम् इति सूत्रेण विचार्यमाणानां वाक्यानां टेः प्लुतः भवति। नित्यं छन्दसि इति सूत्रेण बह्वादिभ्यः नित्यं ङीष् भवति। मायायामण् इति सूत्रेण असुरशब्दात् अण्-प्रत्ययः भवति। अश्विमानण् इति सूत्रेण अश्विमच्छब्दात् अण्- प्रत्ययः भवति। समुद्राभ्राद्घः इति सूत्रेण समुद्रशब्दात् अभ्रशब्दाच्च घ-प्रत्ययः भवति। पाथोनदीभ्यां ड्यण् इति सूत्रेण पाथःशब्दान्नदीशब्दाच्च ड्यण्-प्रत्ययः भवति।



## पाठान्तप्रश्नाः

१. प्रसमुपोदः पादपूरणे इति सूत्रं व्याख्यात।
२. हरिवते इति रूपं साधयत।
३. अक्षण्वन्तः इति रूपं साधयत।
४. नाद्घस्य इति सूत्रं व्याख्यात।
५. भूवो विश्वेषु सवनेषु इत्यत्र भुवस् इत्यस्य सकारस्य "भुवश्च महाव्याहृतेः" इति सूत्रेण कथं न रेफः।
६. ओमभ्यादाने इति सूत्रं साधयत।
७. ऋत्वियः इति रूपं साधयत।



## पाठगतप्रश्नानाम् उत्तराणि

**उत्तरकूटः-१**

१. प्र सम् उप उत् एतेषां द्वित्वं पादपूरणे भवति।
२. छन्दसि इवर्णन्तात् रेफान्ताच्च मतेर्मस्य वः "छन्दसीरः" इति सूत्रेण भवति।
३. अक्षण्वन्तः इत्यत्र नुडागमः "अनो नुट्" इति सूत्रेण भवति।
४. नाद्घस्य इति सूत्रेण नान्तात्परस्य घस्य नुडागमः विधीयते।
५. अम्नरेव इत्यस्य वैकल्पिकं रूपम् अम्न एव इति।
६. तिस्रःमहाव्याहृतयः। ताश्च भूः, भुवः, स्वः इति।



७. मन्त्रस्य आरम्भे ओंशब्दस्य प्लुतो भवति।

**उत्तरकूटः-२**

८. घस्प्रत्ययः।

९. ऋतोरण् इति सूत्रात् अनुवर्तते।

१०. ऋतोरण् इति सूत्रस्य अपवादः।

११. मये च इति सूत्रेण

१२. मयट्- अर्थे।

१३. आगतविकारावयाप्रकृताः

१४. विचार्यमाणानाम्।

१५. नित्यं छन्दसि।

१६. मायायामण्।

१७. अश्विमानण्।

१८. समुद्राभ्राद्घः।

१९. पाथोनदीभ्यां ड्यण्।

## इति त्रयोविंशः पाठः



# २४

# अष्टाध्याय्याः अष्टमः अध्यायः-२

## प्रस्तावना

एतावता भवन्तः पूर्वतनपाठेषु वैदिकशब्दरूपाणाम् प्रक्रियाः ज्ञातवन्तः। अस्मिन् पाठे स्वरप्रक्रिया प्रदर्शयिष्यते। ह्रस्वदीर्घप्लुताः इति एते उच्चारणकालज्ञापकाः स्वराः सन्ति। एते तावत् कस्य स्वरवर्णस्य कियत्कालम् यावत् उच्चारणम् उचितमिति ज्ञापयन्ति। अन्तिमे पाठेऽस्मिन् आदौ प्लुतस्वरविषये आलोचना करिष्यते। त्रिमात्रस्तु भवेत्प्लुतः इति पाणिनीयशिक्षावचनात् अस्य प्लुतस्य त्रिमात्रिकः उच्चारणकालः बोद्धव्यः। पाठान्तभागे च सत्व-णत्व-षत्वविषये आलोचना विधास्यते।



## उद्देश्यानि

इमं पाठं पठित्वा भवान् -

- कदा प्लुतस्वरो भवति तद् ज्ञास्यति।
- प्लुतस्वरविधायकसूत्राणां परिचयं प्राप्स्यति।
- वेदे कदा विसर्गस्य सकारो भवति तद् ज्ञास्यति।
- वेदे कदा नकारस्य णकारो भवति तद् अवगमिष्यति।
- वेदे कदा सकारस्य षकारो भवति तद् ज्ञास्यति।

## २४.१) ये यज्ञकर्मणि॥ (८.२.८८)

**सूत्रार्थः** - ये इत्येतस्य यज्ञकर्मणि प्लुतः भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण यज्ञकर्मणि ये इत्यस्य प्लुतः विधीयते। अस्मिन् सूत्रे ये इति प्रथमान्तं पदम्। यज्ञकर्मणि इति सप्तम्यन्तं पदम्। कर्मशब्दः क्रियावाची। अतः यज्ञकर्मणि इत्यस्य यज्ञक्रियायाम् इत्यर्थः। यज्ञसम्बन्धिक्रियायाम् इति यावत्। "वाक्यस्य टेः प्लुत उदात्तः" इति सूत्रात् प्लुतः इति पदम् अनुवर्तते। यज्ञकर्मणि ये इत्यस्य प्लुतः भवति इति सूत्रार्थः। "अचश्च" इति परिभाषया ये इत्यस्य अचः एव प्लुतः भवति।

**उदाहरणम्** - ये३ यजामहे।

**सूत्रार्थसमन्वयः** - श्रौतयज्ञकर्मणि येन मन्त्रेण आहुतिः दीयते सः मन्त्रः याज्या इत्युच्यते। यज्ञकर्मणि याज्यामन्त्रस्य आदौ "ये३ यजामहे" इति वाक्यं प्रयुज्यते। अतः यज्ञकर्मणि प्रयुक्तत्वात् ये इत्यस्य एकारस्य प्रकृतसूत्रेण प्लुतः विधीयते।

**विशेषः-** यदि यज्ञकर्म न भवति तर्हि ये इत्यस्याचः प्लुतः प्रकृतसूत्रेण न भवति। यथा स्वाध्यायकाले "ये यजामह इति पञ्चाक्षरम्" इत्यादौ ये इत्यस्य प्लुतः न भवति।

## २४.२) अग्नीत्प्रेषणे परस्य च (८.२.९२)

**सूत्रार्थः** – अग्नीधः प्रेषणे आदेः प्लुतः तस्मात्परस्य च।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण प्लुतत्वं विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। अग्नीत्प्रेषणे परस्य च इति सूत्रगतपदच्छेदः। अग्नीत्प्रेषणे इति सप्तम्यन्तं पदम्। अग्नीधः प्रेषणमिति अग्नीत्प्रेषणम्, तस्मिन् अग्नीत्प्रेषणे इति। परस्य इति षष्ठ्यन्तं पदम्। च इति अव्ययपदम्। ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः इति सूत्रात् आदेः इति पदम्, ये यज्ञकर्मणि इति सूत्रात् यज्ञकर्मणि इति पदं च अनुवर्तते। वाक्यस्य टेः प्लुत उदात्तः इति सूत्रात् प्लुतः इति पदम् अनुवर्तते तेन अचश्च इति परिभाषया अचः इत्यपि लभ्यते। ततश्च सूत्रार्थो भवति अग्नीधः प्रेषणे आदेः अचः प्लुतत्वं तस्मात् परस्य च अचः अपि प्लुतत्वं भवति यज्ञकर्मणि इति। आग्नीध्राख्यं ऋत्विजम् प्रति अध्वर्योः प्रेषणे अर्थात् तं प्रति उपदेशवाक्ये निर्देशवाक्ये वा आदेः अचः, तस्मात् (आदिभूतात्) परस्य च अचः प्लुतत्वं भवति इति सरलार्थः।

**उदाहरणम्** – ओ३श्रा३वय इति।

**सूत्रार्थसमन्वयः** - ओ३श्रा३वय इति आग्नीध्राख्यं ऋत्विजं प्रति अध्वर्योः निर्देशवाक्यम्। तेनात्र आदेः अचः ओकारस्य ततः परस्य अचः आकारस्य (श्रा-इत्यस्य) च अनेन सूत्रेण प्लुतत्वम्।

**विशेषः-** सूत्रे प्रेषणे इति उक्तम् अस्ति अतः तद्भिन्ने व्यापारे प्लुतः न भवति। यथा - अग्नीदग्नीन् विहर, इत्यादौ बहिस्तृणोहि इत्यादौ च न प्लुतत्वम्। यज्ञकर्मणि इत्युक्तत्वात् यज्ञकर्मभिन्नस्थले न प्लुतत्वम्, तेन आश्रावयास्तश्रौषट् इत्यादौ न प्लुतत्वम्।

## २४.३) विभाषा पृष्टप्रतिवचने हेः॥ (८.२.९३)

**सूत्रार्थः** – पृष्टप्रतिवचने हेः विभाषा प्लुतो भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण प्लुतत्वं विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। विभाषा इति प्रथमैकवचनान्तम्, पृष्टप्रतिवचने इति सप्तम्येकवचनान्तम्, हेः इति षष्ठ्येकवचनान्तं पदम्। विभाषा इत्यस्य विकल्पेन इत्यर्थः। पृष्टप्रतिवचने इत्यत्र पृष्टस्य प्रतिवचनम् आख्यानं पृष्टप्रतिवचनं, तस्मिन् इति षष्ठीतत्पुरुषः। वाक्यस्य टेः प्लुत उदात्तः इति सूत्रात् प्लुतः इति पदमनुवर्तते, तेन अचश्च इति परिभाषया अचः इति लभ्यते। एवं सूत्रार्थो भवति पृष्टस्य प्रतिवचने (प्रत्युत्तरे) हेः अचः विकल्पेन प्लुतः भवति इति।

**उदाहरणम्** – अस्य उदाहरणमस्ति अकार्षं हि३, अकार्षं हि इति च।

**सूत्रार्थसमन्वयः** - अकार्षीः कटम् इति पृष्टस्य प्रश्नस्य उत्तरं भवति अकार्षं हि इति। तेन अत्र प्रत्युत्तरवाक्ये हेः अचः इकारस्य विकल्पेन प्लुतत्वम्। एवं प्लुतत्वपक्षे अकार्षं हि३ इति तदभावपक्षे अकार्षं हि इति भवति।



**विशेषः**- सूत्रे पृष्टप्रतिवचने इत्युक्तत्वात् प्रत्युत्तरभिन्नवाक्ये हेः अचः प्लुतत्वं न भवति, तेन कटं करिष्यति हि इत्यादौ सामान्यवाक्ये हेः न प्लुतत्वम्। सूत्रे हेः इत्युक्तत्वात् करोमि ननु इत्यादौ प्रत्युत्तरत्वे अपि हिभिन्नस्य ननु-इत्यादेः प्लुतत्वं न।

## २४.४) आम्रेडितं भर्त्सने।॥ (८.२.९५)

**सूत्रार्थः** – भर्त्सने आम्रेडितं प्लुतं भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण प्लुतत्वं विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। आम्रेडितम् इति प्रथमैकवचनान्तम्, भर्त्सने इति सप्तम्येकवचनान्तं च। वाक्यस्य टेः प्लुत उदात्तः इत्यस्मात् सूत्रात् टेः इति प्लुतः इति च अनुवर्तते, प्लुत इति आम्रेडितम् इत्यस्य विशेषणम्, तेन तस्य नपुंसकत्वम्। प्लुतः इत्यस्य अनुवर्तनाद् अचश्च इति परिभाषया अचः इत्यपि लभ्यते। भर्त्सनं नाम अपकारशब्दैः भयोत्पादनम्। तस्य परमाम्रेडितम् इति सूत्रेण उक्तम् आम्रेडितमत्र न गृहीतम्। अत्र आम्रडितपदं पूर्वस्य परस्य च द्वयोः उपलक्षणार्थम्। अमरकोषे अपि उक्तम् आम्रेडितं द्विस्त्रिरुक्तम् इति। तेन सूत्रार्थो भवति भर्त्सने अर्थे आम्रेडितस्य (पूर्वस्य परस्य च) टेः अचः प्लुतत्वं भवति इति।

**उदाहरणम्** – अस्य उदाहरणं भवति दस्यो३ दस्यो३ घातयिष्यामि त्वाम् इति।

**सूत्रार्थसमन्वयः** - अत्र वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्स्नभर्त्सनेषु इत्यनेन भर्त्सने अर्थे गम्यमाने दस्युशब्दस्य द्वित्वं भवति। तयोः द्वयोः दस्यो इत्यनयोः टेः अचः ओकारस्य प्रकृतसूत्रेण प्लुतत्वम्।

## २४.५) अङ्गयुक्तं तिङाकाङ्क्षम्॥ (८.२.९६)

**सूत्रार्थः** - छन्दसि भर्त्सने अङ्गयुक्तं तिङाकाङ्क्षम् प्लुतम् भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण प्लुतत्वं विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। अङ्गयुक्तम् इति प्रथमान्तं, तिङाकाङ्क्षम् इत्यपि प्रथमान्तं पदम्। अङ्गयुक्तम् इत्यस्य अङ्गशब्देन युक्तम् इत्यर्थः। तिङाकाङ्क्षमित्यस्य साकाङ्क्षं तिङ् इत्यर्थः। अस्मिन् सूत्रे आम्रेडितं भर्त्सने इत्यस्मात् सूत्रात् भर्त्सने इति, वाक्यस्य टेः प्लुत उदात्तः इत्यस्मात् टेः, प्लुतः इति पदद्वयं च अनुवर्तते। प्लुत इत्यनुवर्तनाद् अचश्च इति परिभाषया अचः इत्यपि योज्यते। तेन सूत्रार्थो भवति अङ्गशब्देन युक्तं साकाङ्क्षं यत् तिङ् तस्य टेः अचः प्लुतत्वं भवति।

**उदाहरणम्** – अस्य उदाहरणं भवति अङ्ग कूज३ इदानीं ज्ञास्यसि जाल्म इति।

**सूत्रार्थसमन्वयः** - अङ्ग कूज३ इदानीं ज्ञास्यसि जाल्म इत्यस्य मूर्ख इदानीमेव अपशब्दकथनस्य फलं प्राप्स्यतीत्यर्थः। अत्र अङ्ग इति रोषपूर्वकं सम्बोधनम्। अत्र कूज इति इदानीं ज्ञास्यसि जाल्म इति वाक्यस्थितम् ज्ञास्यसि इति तिङन्तम् आकाङ्क्षति अतः कूज इति साकाङ्क्षं तिङ्। इदं च अङ्गशब्देन युक्तम् अस्ति। एवं च अत्र गम्यमानं भर्त्सनम् किञ्च अङ्गशब्देन युक्तं साकाङ्क्षं तिङ् कूज इति वर्तते, तेन प्रकृतसूत्रेण कूज इत्यस्य टेः अचः प्लुतत्वं सम्भवति।

**विशेषः-** सूत्रे साकाङ्क्षतिङः ग्रहणात् अङ्ग देवदत्त मिथ्या वदसि इत्यादौ भर्त्सनार्थस्य सत्त्वेऽपि अङ्गशब्देन युक्तं देवदत्त इति सुबन्तं वर्तते इत्यतः न प्लुतत्वम्।

अङ्ग पच इत्यादौ पच इति तिङन्तं स्वार्थप्रतिपादने न कमपि अपेक्षते, अतः अत्र आकाङ्क्षायाः असत्त्वात् न प्रकृतसूत्रेण प्लुतत्वम्।

भर्त्सने गम्यमाने एव साकाङ्क्षतिङः प्लुतत्वम् भवति, तेन अङ्गाधीष्व भक्तं तव दास्यामि (पठ अन्नं तुभ्यं दास्यामि) इत्यादौ अधीष्व इति तिङन्तस्य दास्यामि इति तिङन्तेन सह सम्बन्धत्वेऽपि भर्त्सनार्थस्य अभावात् न प्लुतत्वम्।

## २४.६) पूर्वं तु भाषायाम्॥ (८.२.९८)

**सूत्रार्थः** - विचार्यमाणानां टेः प्लुतः भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण प्लुतत्वं विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। पूर्वमिति प्रथमैकवचनान्तम्, तु इति अव्ययपदम्, भाषायामिति सप्तम्येकवचनान्तम्। विचार्यमाणानाम् इति सूत्राद् विचार्यमाणानामिति पदम् अनुवर्तते। वाक्यस्य टेः प्लुत उदात्तः इति सम्पूर्णम् अपि सूत्रमत्र अनुवर्तते। प्लुतः इत्यनुवर्तनाद् अचश्च इति परिभाषया अचः इत्यपि लभ्यते। भाषायामित्यस्य लौकिकसंस्कृते इत्यर्थः। पूर्वमित्यस्य पूर्वं विद्यमानमित्यर्थः। तेन लौकिकसंस्कृते विचार्यमाणानां (वाक्यानाम्) मध्ये पूर्वं विद्यमानं यद् वाक्यं तस्य टेः अचः प्लुतो भवति, तस्य च उदात्तस्वरो भवति इति सूत्राशयः। अत्र वाक्ये यस्य पूर्वं प्रयोगः तस्यैव पूर्वत्वम् बोद्धव्यम्।

**उदाहरणम्** – अहिर्नु३ रज्जुर्नु।

**सूत्रार्थसमन्वयः** – अस्य उदाहरणवाक्यस्य सर्पो वा रज्जुर्वा इत्यर्थः। नु इति वितर्केऽर्थे अव्ययम्। अत्र विचार्यमाणानां वाक्यानां मध्ये पूर्वं विद्यमानं यद् अहिर्नु इति वाक्यं तस्य टेः अचः उकारस्य अनेन सूत्रेण प्लुतत्वम् उदात्तस्वरश्च भवति।

**विशेषः-** अस्मात् सूत्रात् पूर्वं सूत्रम् अस्ति विचार्यमाणानाम् इति, तेन अपि इदमेव कार्यं भवति। परन्तु अस्मिन् सूत्रे भाषायाम् इति पदं वर्तते, तेन पूर्वं सूत्रं वैदिकप्रयोगविषये प्रवर्तते इदञ्च लौकिकप्रयोगविषये प्रवर्तते इति ज्ञेयम्।

## २४.७) अनुदात्तं प्रश्नान्ताभिपूजितयोः॥ (८.२.१००)

**सूत्रार्थः** - अनुदात्तः प्लुतः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण प्लुतस्य अनुदात्तस्वरविधानं भवति। अस्मिन् सूत्रे द्वे पदे स्तः। अनुदात्तमिति प्रथमैकवचनान्तं विधायकं पदम्। प्रश्नान्ताभिपूजितयोः इति सप्तमीद्विवचनान्तं पदम्। वाक्यस्य टेः प्लुत उदात्तः इत्यस्मात् वाक्यस्य टेः प्लुतः इति पदत्रयम् अनुवर्तते। प्लुतस्य अनुवर्तनाद् अचश्च इति परिभाषया अचः इत्यपि लभ्यते। प्रश्नशब्दस्य प्रश्नार्थं वाक्यम् इत्यर्थः, तस्य अन्तः प्रश्नान्तः इति षष्ठीतत्पुरुषः प्रश्नार्थवाक्यस्य अन्तिमः इत्यर्थः। अभिपूजितशब्दस्य सत्कार इत्यर्थः। तेन सूत्रार्थो भवति प्रश्नार्थकस्य सत्कारार्थकस्य च वाक्यस्य अन्तस्य टेः प्लुतस्य अचः



अनुदात्तस्वरो भवति। तत्र प्रश्नार्थे वाक्ये अनन्त्यस्यापि प्रश्नाख्यानयोः इत्यनेन सूत्रेण विहितस्य प्लुतस्य, अभिपूजितार्थे वाक्ये च दूराद्धूते च इत्यादिना विहितस्य प्लुतस्य च अनेन सूत्रेण अनुदात्तस्वरो भवति।

**उदाहरणम्** – अत्र प्रश्नान्तस्य उदाहरणं भवति अग्निभूत३इ इति पट३उ इति च। अभिपूजितस्य उदाहरणं भवति शोभनः खल्वति माणवक३ इति।

**सूत्रार्थसमन्वयः** - अत्र अगमः पूर्वं ग्रामान् अग्निभूते। इति प्रश्नार्थकं वाक्यम्। तस्य अन्तस्य टेः एकारस्य (अ इ) अनन्त्यस्य अकारस्य अनन्त्यस्यापि प्रश्नाख्यानयोः इत्यनेन प्लुतत्वम्। वाक्यस्य टेः प्लुत उदात्तः इत्यनेन प्लुतस्य उदात्तत्वे प्राप्ते, तस्य प्रकृतसूत्रेण अनुदात्तस्वरः, तेन अग्निभूत३इ इति रूपम्। पटो इत्यत्र टेः उकारस्य अनन्त्यस्य अकारस्य अनन्त्यस्यापि प्रश्नाख्यानयोः इत्यनेन प्लुतत्वम्। वाक्यस्य टेः प्लुत उदात्तः इत्यनेन प्लुतस्य उदात्तत्वे प्राप्ते, तस्य प्रकृतसूत्रेण अनुदात्तस्वरः, तेन पट३उ इति रूपम्। शोभनः खल्विति माणवकः इत्यत्र अन्तस्य टेः अचः अकारस्य दूराद्धूते च इत्यनेन प्लुतस्वरः। तस्य प्रकृतसूत्रेण अनुदात्तस्वरः, तेन माणवक३ इति रूपम्।

## २४.८) उपरिस्विदासीदिति च॥ (८.२.१०२)

**सूत्रार्थः** - उपरिस्विदासीत् इत्येतस्य टेः प्लुतोऽनुदात्तः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण अनुदात्तस्वरः विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। उपरिस्विदासीत् इति च इति पदच्छेदः। पदत्रयमपि अत्र अव्ययम्। अस्मिन् सूत्रे अनुदात्तं प्रश्नान्ताभिपूजितयोः इत्यतः अनुदात्तम् इति पदम्, वाक्यस्य टेः प्लुत उदात्तः इत्यस्मात् सूत्रात् वाक्यस्य टेः प्लुतः इति पदत्रयम् अनुवर्तते। तेन सूत्रार्थो भवति उपरिस्विदासीत् इति वाक्यस्य टेः प्लुतस्य अनुदात्तस्वरो भवति।

**उदाहरणम्** – अस्य उदाहरणं भवति उपरिस्विदासी३द् इति।

**सूत्रार्थसमन्वयः** - 'अधः स्विदासी ३ दुपरिस्विदासी ३ त्' इति ऋग्वेदस्य मन्त्रः। अत्र अधः स्विदासी ३ द् इति एकं वाक्यम् उपरिस्विदासी ३ द् इत्यपरं वाक्यम्। सृष्टेः पूर्वं प्रकृतिः स्रष्टुः उपरि आसीद् अथवा अधः इत्येवम् अत्र वाक्यद्वये विचारोऽस्ति। तेन विचार्यमाणानाम् इति सूत्रेण उभयत्र वाक्ये टेः अचः प्लुतस्वरः उदात्तत्वं च भवति। एवम् उपरिस्विदासी३द् इत्यत्र प्लुतस्य अचः उदात्तत्वं बाधित्वा प्रकृतसूत्रेण अनुदात्तस्वरो भवति।

**विशेषः**- सूत्रे उपरिस्विदासी३द् इति ग्रहणाद् अधः स्विदासी३द् इत्यत्र प्लुतस्य न अनुदात्तस्वरः।

## २४.९) अनन्त्यस्यापि प्रश्नाख्यानयोः।(८.२.१०५)

**सूत्रार्थः**- अनन्त्यस्य अन्त्यस्य च पदस्य टेः स्वरितः प्लुतः प्रश्नाख्यानयोः।

**सूत्रव्याख्या**- विधिसूत्रमिदम्। अनेन सूत्रेण प्लुतत्वम् विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। अनन्त्यस्य इति षष्ठ्येकवचनान्तम्, अपि इति अव्ययम्, प्रश्नाख्यानयोः इति



सप्तमीद्विवचनान्तम्। अन्ते भवः अन्त्यः, न अन्त्यः अनन्त्यः, तस्य अनन्त्यस्य इति नञ्तत्पुरुषः अन्त्यभिन्नस्य इत्यर्थः। प्रश्नश्च आख्यानञ्च प्रश्नाख्याने, तयोः प्रश्नाख्यानयोः इति इतरेतरयोगद्वन्द्वसमासः। अस्मिन् सूत्रे स्वरितमाम्रेडितेऽसूया-सम्मति-कोप-कुत्सनेषु इति सूत्राद् स्वरितम् इति पदम्, वाक्यस्य टेः प्लुत उदात्तः इति सूत्राद् च वाक्यस्य टेः प्लुत इति एतानि पदानि अनुवर्तन्ते। प्लुतग्रहणाद् अचश्च इति परिभाषया अचः इत्यपि लभ्यते। पदस्य इत्यपि अनुवर्तते। अनन्त्यस्यापि इत्यत्र अपि शब्दः अस्ति, तेन अन्त्यस्यापि ग्रहणम्। एवं यथा अन्त्यस्य तथा अनन्त्यस्यापि इति बोद्धव्यम्। आख्यानं नाम उत्तरं वस्तुस्थितिवर्णनं वा। अस्य सूत्रस्य सरलार्थो भवति प्रश्ने उत्तरे (वस्तुस्थितिवर्णने वा) च अन्त्यस्य अनन्त्यस्यापि च पदस्य टेः अचः स्वरितस्वरः प्लुतश्च भवति।

**उदाहरणम्-** अस्य उदाहरणं भवति **प्रश्ने-** अगमः३ पूर्वा३न् ग्रामा३न् इति, **आख्याने-** अगम३म् पूर्वा३न् ग्रामा३न् इति।

**सूत्रार्थसमन्वयः**- अगम:३ पूर्वा३न् ग्रामा३न् इत्यस्य तावत् त्वम् पूर्वस्थितान् ग्रामान् गतवान् वा इत्यर्थः। इदं प्रश्नार्थकं वाक्यम् अतः अत्र अन्त्यस्य पदस्य अन्त्यभिन्नानां च पदानां टेः अचः प्रकृतसूत्रेण स्वरितस्वरः प्लुतश्च इति। अगम३म् पूर्वा३न् ग्रामा३न् इत्यस्य तावत् आम् , गतवान् पूर्वस्थितान् ग्रामान् इत्यर्थः, इदं तु उत्तरार्थकं वाक्यम्। अतः अत्रापि पूर्ववद् अन्त्यस्य पदस्य अन्त्यभिन्नानां च पदानां टेः अचः प्रकृतसूत्रेण स्वरितस्वरः प्लुतश्च इति।

**विशेषः**- यद्यपि प्रश्नार्थवाक्यस्य अन्त्यस्य पदस्य टेः अचः अनुदात्तं प्रश्नान्ताभिपूजितयोः इत्यनेन अनुदात्तस्वरः प्लुतश्च भवति तथापि प्रकृतसूत्रे अपिशब्देन अन्त्यस्यापि ग्रहणाद् प्रश्नार्थकवाक्यस्य अन्त्यस्य प्रकृतसूत्रेण स्वरितस्वरोऽपि भवति। एवञ्च विकल्पेन प्रश्नान्तस्य स्वरितस्वरः अनुदात्तस्वरश्च भवति।

## २४.१०) दीर्घादटि समानपादे॥ (८.३.९)

**सूत्रार्थः** - दीर्घान्नकारस्य रुर्वा स्यादटि तौ चेन्नाटौ एकपादस्थौ स्याताम्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण नकारस्य रुः विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। दीर्घात् इति पञ्चम्यन्तं, अटि इति सप्तम्यन्तं, समानपदे इति सप्तम्यन्तं पदम्। अट् इति प्रत्याहारः। समानश्च असौ पादश्च समानपादः, तस्मिन् इति कर्मधारयसमासः इति समानपादे एकपादे इत्यर्थः। अत्र उभयथर्क्षु इत्यस्माद् उभयथा ऋक्षु इति पदद्वयम्, नश्छव्यप्रशान् इत्यस्मात् नः इति षष्ठ्यन्तम्, मतुवसो रु संबुद्धौ छन्दसि इत्यस्मात् रुः इति प्रथमान्तं, तयोर्य्वावचि संहितायाम् इत्यस्मात् संहितायाम् इत्येतानि पदानि अनुवर्तन्ते। उभयथा इत्यस्य उभयम् (एकस्मिन् पक्षे रुः अपरस्मिन् पक्षे नकारः) इत्यर्थः। ऋक्षु इत्यस्य ऋङ्मन्त्रेषु इत्यर्थः। तेन अस्य सरलार्थो भवति ऋङ्मन्त्रेषु एकस्मिन् पादे दीर्घात् वर्णाद् नकारस्य रुः विकल्पेन भवति अट्प्रत्याहारस्थवर्णे परतः संहितायां विषये इति।

**उदाहरणम्** – अस्य उदाहरणं भवति देवाँ अच्छा सुमती (ऋ.४.१.२) इति, महाँ इन्द्रो य ओजसा (ऋ.८.६.१) इति च।



**सूत्रार्थसमन्वयः** – रुत्वपक्षे देवान् अच्छा इति स्थिते, महान् इन्द्रो इति स्थिते अत्र ऋङ्मन्त्रे एकस्मिन् पादे एव दीर्घात् नकारस्य सत्त्वात् ततः परम् अट्प्रत्याहारस्थवर्णस्य विद्यमानत्वाद् संहितायां विषये नकारस्य रुत्वे आतोऽटि नित्यम् इत्यनेन रोः पूर्वस्य अचः अनुनासिके भोभगोअघोअपूर्वस्य योऽशि इत्यनेन रोः यादेशे लोपः शाकल्यस्य इत्यनेन तस्य लोपे देवाँ अच्छा इति महाँ इन्द्रो इति रूपद्वयं सिद्ध्यति। अस्य सूत्रस्य वैकल्पिकत्वाद् रुत्वाभावपक्षे संयोगे देवानच्छ इति महानिन्द्रो इत्यपि भविष्यति।

**विशेषः**- वाक्ये संहिता (सन्धिः) वक्तुः इच्छाधीना भवति। अतः वाक्ये संहितायाः विवक्षायामेव सन्धिः। अविवक्षायाम् तु संहिताभावः। एवम् अस्य सूत्रस्य वैकल्पिकत्वं तु सिध्यति एव, तथापि पूर्वस्मात् सूत्रात् उभयथा इति पदस्य ग्रहणेन वैकल्पिकत्वविधानात् क्वचित् रुत्वं न भवति इति, तेन आदित्यान् याचिषामहे इत्यत्र सूत्रोक्तानां समेषां विषयाणां सत्त्वेऽपि नकारस्य रुत्वं न भवति।



## पाठगतप्रश्नाः-१

१. ये इत्यस्य कदा प्लुतस्वरः भवति।
२. अग्नीधः प्रेषणे इत्यत्र प्रेषणे शब्दस्य कः अर्थः।
३. हिशब्दस्य कदा प्लुतस्वरः भवति।
४. कस्मिन् अर्थे आम्रेडितस्य प्लुतस्वरः भवति।
५. केन शब्देन युक्तं तिङन्तं प्लवते।
६. भाषायाम् इति शब्दस्य कोऽर्थः।
७. अभिपूजितशब्दस्य कः अर्थः।
८. अनन्त्यस्यान्त्यस्यापि प्रश्नाख्यानयोः इत्यत्र अपिशब्देन कस्य ग्रहणम्।
९. वेदे दीर्घात् नकारस्य रुविधायकं सूत्रं किम्।

## २४.११) आतोऽटि नित्यम्॥ (८.३.३)

**सूत्रार्थः** - अटि परतो रोः पूर्वस्य आतः स्थाने नित्यम् अनुनासिकः।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण अनुनासिकस्वरः विधीयते। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। आतः इति षष्ठ्यन्तम्। अटि इति सप्तम्यन्तम्। नित्यमिति प्रथमान्तम्। आतः इत्यस्य आकारस्य इत्यर्थः। अट् इति प्रत्याहारः। अत्रानुनासिकः पूर्वस्य तु वा इत्यस्मात् सूत्रात् अनुनासिकः पूर्वस्य इति पदद्वयम्, मतुवसो रु संबुद्धौ छन्दसि इत्यस्मात् रुः इति, तयोर्य्वावचि संहितायाम् इत्यस्मात् संहितायाम् इत्येतानि पदानि अनुवर्तन्ते। तेन सूत्रार्थो भवति रोः पूर्वस्य आकारस्य नित्यम् अनुनासिकस्वरो भवति यदि परे अट्प्रत्याहारस्थवर्णः तिष्ठति।



**उदाहरणम् –** अस्य उदाहरणं भवति महाँ इन्द्रो य ओजसा इति।

**सूत्रार्थसमन्वयः** - महान् इन्द्रः इत्यत्र दीर्घादटि समानपादे इत्यनेन नकारस्य रुत्वं भवति। ततः महारु इन्द्रः इति स्थिते प्रकृतसूत्रेण रोः पूर्वस्य आकारस्य नित्यम् अनुनासिकस्वरो भवति परे अट्प्रत्याहारस्थवर्णस्य इकारस्य सत्त्वात्। ततः भोभगोअघोअपूर्वस्य योऽशि इत्यनेन रोः यादेशे लोपः शाकल्यस्य इत्यनेन यकारस्य लोपे महाँ इन्द्रः इति सिद्ध्यति।

**विशेषः-** अत्रानुनासिकः पूर्वस्य तु वा इत्यनेन रोः पूर्वस्य आकारस्य विकल्पेन अनुनासिकस्वरः प्राप्नोति परन्तु तं बाधित्वा प्रकृतसूत्रेण रोः पूर्वस्य  नित्यम् अनुनासिकस्वरः भवति। परन्तु तथापि तैतिरीयशाखाध्यायिनः महान् इन्द्रः इत्यत्र अनुस्वारं (महां) पठन्ति। अत्र अनुस्वारः कथं सिद्ध्यति इति चेत् व्यत्ययो बहुलम् इति सूत्रेण व्यत्ययेन भवति इति। एवम् अत्र पुनः विकल्पविधानाद् प्रकृतसूत्रेण नित्यम् अनुनासिकविधानं व्यर्थं भवति इति प्रकृतसूत्रप्रयोजनम् चिन्त्यम् अस्ति।

## २४.१२) छन्दसि वाऽप्राम्रेडितयोः॥ (८.३.४९)

**सूत्रार्थः** - विसर्गस्य सो वा स्यात् कुप्वोः प्रशब्दम् आम्रेडितं च वर्जयित्वा।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण विसर्गस्य सकारः भवति। अस्मिन् सूत्रे त्रीणि पदानि सन्ति छन्दसि वा अप्राम्रेडितयोः इति। छन्दसि इति सप्तम्येकवचनान्तं, वा इति अव्ययपदम्, अप्राम्रेडितयोः इति सप्तमीद्विवचनान्तं पदम्। छन्दसि इत्यस्य वेदे इत्यर्थः। प्रश्च आम्रेडितञ्च प्राम्रेडिते, न प्राम्रेडिते अप्राम्रेडिते, तयोः अप्राम्रेडितयोः। प्रशब्दम् आम्रेडितशब्दं च त्यक्त्वा इत्यर्थः। आम्रेडितशब्दस्य द्विरुक्तिरित्यर्थः। अस्मिन् सूत्रे विसर्जनीयस्य सः इति सम्पूर्णमपि सूत्रम् अनुवर्तते। विसर्जनीयशब्दस्य विसर्ग इत्यर्थः। क पौ च कुपू तयोः कुप्वोः इति सप्तम्यन्तम् कुप्वोः इति, तयोर्य्वावचि संहितायाम् इत्यस्मात् संहितायाम् इति एतानि पदानि अनुवर्तन्ते। कुशब्दस्य कवर्गः इत्यर्थः, पुशब्दस्य पवर्गः इत्यर्थः। वेदे विसर्गस्य स्थाने सकारः विकल्पेन भवति कवर्गः पवर्गः वा यदि परे तिष्ठति परन्तु यदि परं प्रशब्दः आम्रेडितम् वा तिष्ठति तर्हि न भवति इति सूत्रस्याशयः।

**उदाहरणम् –** अस्य उदाहरणं भवति अग्ने त्रातर्ऋतस्कविः इति गिरिर्न विश्वतस्पृथुः इति च।

**सूत्रार्थसमन्वयः** – त्रातः कविः इत्यत्र कवर्गस्थवर्णः परं विद्यते तेन विसर्गस्य विकल्पेन सकारे त्रातस्कविः इति सिद्ध्यति। एवं विश्वतः पृथुः इत्यत्र पवर्गस्थवर्णः परं विद्यते तेन विसर्गस्य विकल्पेन सकारे विश्वतस्पृथुः इति सिध्यति।

**विशेषः-** अनेन सूत्रेण विकल्पेन सकारो भवति तेन क्वचित् विसर्गस्य स्थाने सकारः प्रयुज्यते क्वचित् च विसर्ग एव प्रयुज्यते। एवं वसुनः पूर्व्यस्पतिः (ऋग्वेदः१०.४८.१) इत्यत्र यद्यपि पवर्गस्थवर्णः परं विद्यते। किन्तु यदि प्रशब्दः परं स्यात् तर्हि विसर्गस्य सकारो न भवति यथा अग्निः प्र विद्वान् (अथर्ववेदः ५.२६.१) इत्यत्र प्रशब्दे परे विसर्गस्य न सकारः। आम्रेडितं यदि परं स्यात् तदा अपि विसर्गस्य सकारो न भवति यथा पुरुषः पुरुषः परि इत्यत्र द्वितीयपुरुषशब्दस्य तस्य परमाम्रेडितम् इत्यनेन आम्रेडितसंज्ञा भवति। सः आम्रेडितसंज्ञकः पुरुषशब्दः परे अस्ति इत्यतः विसर्गस्य न सकारः।



## २४.१३) कःकरत्करतिकृधिकृतेष्वनदितेः॥ (८.३.५०)

**सूत्रार्थः** - विसर्गस्य सः स्यात्।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण विसर्गस्य सकारो भवति। अस्मिन् सूत्रे द्वे पदे स्तः। कःकरत्करतिकृधिकृतेषु इति सप्तमीबहुवचनान्तं, अनदितेः इति षष्ठ्येकवचनान्तं पदम्। कस् च करत् च करतिश्च कृधिश्च कृतश्च कःकरत्करतिकृधिकृताः तेषु कःकरत्करतिकृधिकृतेषु इति। न अदिति अनदितिः तस्य अनदितेः इति। अदितिशब्दस्य विसर्गं विहाय इत्यर्थः। छन्दसि वाप्राम्रेडितयोः इत्यस्मात् सूत्रात् छन्दसि इति अनुवर्तते। छन्दसि इत्यस्य वेदे इत्यर्थः। अत्र विसर्जनीयस्य सः इति सम्पूर्णमपि सूत्रम् अनुवर्तते। विसर्जनीयशब्दस्य विसर्ग इत्यर्थः। तयोर्य्वावचि संहितायाम् इत्यस्मात् संहितायाम् इति पदञ्च अनुवर्तते। तेन सूत्रार्थो भवति वेदे संहितायां विषये विसर्गस्य सकारो भवति कःकरत्करतिकृधिकृतेषु परेषु अदितिशब्दस्य विसर्गस्य सकारो न भवति।

**उदाहरणम्** – अस्य उदाहरणानि भवन्ति 'प्रदिवो अपस्कः', 'यथा नो वस्यसस्करत्', 'सुपेशसस्करोति', 'उरुणस्कृधि', 'सोमं न चारु मघवत्सु नस्कृतम्' इत्येतानि।

**सूत्रार्थसमन्वयः** - कृधातोः लुङि प्रथमैकवचने वेदे कः करत् च इति रूपद्वयं भवति, लटि करति, लोटि कृधि इति रूपम्। कृधातोः क्तप्रत्यये विभक्तौ कृतमिति रूपम्। एवम् अत्र अपः कः इति, वस्यसः करत् इति, सुपेशसः करति, उरुणः कृधि इति, नः कृतम् इति स्थिते प्रकृतसूत्रेण सर्वत्र विसर्गस्य सकारः।

**विशेषः**- प्रकृतसूत्रे अनदितेः इत्युक्तत्वात् अदितिशब्दाद् आगतस्य विसर्गस्य कःकरत्करतिकृधिकृतेषु परेषु अपि सकारादेशः न भवति। तेन यथा नो अदितिः करत् इत्यादिमन्त्रे अदितिः करत् इत्यत्र विसर्गस्य न सकारः।

## २४.१४) पातौ च बहुलम्॥ (८.३.५२)

**सूत्रार्थः** - छन्दसि पञ्चम्याः विसर्गस्य सः स्यादुपरिभवार्थे परिशब्दे परतः।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण विसर्गस्य सकारः भवति। अस्मिन् सूत्रे त्रीणि पदानि सन्ति। पातौ इति सप्तम्यन्तम्। च इति अव्ययपदम्। बहुलम् इति प्रथमान्तं पदम्। अस्मिन् सूत्रे पञ्चम्याः परावध्यर्थे इत्यस्मात् सूत्रात् पञ्चम्याः इति पदम्, छन्दसि वाऽम्रेडितयोः इत्यस्मात् सूत्रात् छन्दसि इति पदम्, सोऽपदादौ इत्यस्मात् सः इति प्रथमान्तम् पदम्, तयोर्य्वावचि संहितायाम् इत्यस्मात् सूत्रात् संहितायाम् इति सप्तम्यन्तम् पदम् च इति अनुवर्तन्ते। विसर्जनीयस्य इत्यपि अनुवर्तते। तस्य च विसर्गस्य इत्यर्थः। छन्दसि इत्यस्य वेदे इत्यर्थः। संहिताशब्दस्य च सन्धिः इत्यर्थः। तेन सूत्रर्थो भवति वेदे संहिताविषये पञ्चम्याः विसर्गस्य सकारो भवति यदि परे पाधातुः तिष्ठति इति।

**उदाहरणम्** – सूर्यो नो दिवस्पातु इति।



**सूत्रार्थसमन्वयः** - सूर्यो नो दिवस्पातु (ऋ.१०.१५८.१) इत्यस्मिन् मन्त्रांशे दिवः इति पञ्चम्यन्तम्, ततः परं पाधातोः रूपं पातु इति विद्यते, तस्मात् पञ्चम्यन्तस्य दिवः विसर्गस्य सकारे दिवस्पातु इति रूपम्।

**विशेषः-** सूत्रे बहुलम् इति पदं विद्यते। बहुलग्रहणं सर्वोपाधिवर्जनार्थम्। तस्मात् क्वचिद् अन्यद् अपि भवति। तेन कदाचित् पाधातुः परे सत्यपि पञ्चम्याः विसर्गस्य सकारो न भवति। अस्य उदाहरणं परिषदः पातु इति, अत्र पञ्चम्याः विसर्गस्य न सकारः।

## २४.१५) षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु॥ (८.३.५३)

**सूत्रार्थः** – छन्दसि पतिपुत्रपृष्ठपारपदपयस्पोषेषु षष्ठ्याः विसर्जनीयस्य सः भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण विसर्गस्य सः भवति। अस्मिन् सूत्रे द्वे पदे स्तः। षष्ठ्याः इति षष्ठ्येकवचनान्तं, पतिपुत्रपृष्ठपारपदपयस्पोषेषु इति सप्तमीबहुवचनान्तं पदम्। पतिश्च पुत्रश्च पृष्ठश्च पारश्च पदञ्च पयः च पोषश्च इति पतिपुत्रपृष्ठपारपदपयस्पोषाः, तेषु पतिपुत्रपृष्ठपारपदपयस्पोषेषु इति, एतेषु परेषु इत्यर्थः। अस्मिन् सूत्रे छन्दसि वाऽम्रेडितयोः इत्यस्मात् सूत्रात् छन्दसि इति पदम्, सोऽपदादौ इत्यस्मात् सः इति प्रथमान्तम् पदम्, तयोर्य्वावचि संहितायाम् इत्यस्मात् सूत्रात् संहितायाम् इति सप्तम्यन्तम् पदम् च इति अनुवर्तन्ते। विसर्जनीयस्य इत्यपि अनुवर्तते। तस्य च विसर्गस्य इत्यर्थः। छन्दसि इत्यस्य वेदे इत्यर्थः। संहिताशब्दस्य च सन्धिः इत्यर्थः। तेन सूत्रार्थो भवति वेदे संहिताविषये षष्ठ्याः विसर्गस्य सकारो भवति यदि परे पतिपुत्रपृष्ठपारपदपयस्पोषाणाम् कोऽपि तिष्ठति इति।

**उदाहरणम्** – अस्य उदाहरणानि भवन्ति - वाचस्पतिं विश्वकर्माणम् (ऋ.१०.८१.७), दिवस्पुत्राय सूर्याय (ऋ.१०.१७.१), दिवस्पृष्ठं भन्दमानः (ऋ.३.२.१२), तमसस्पारमस्य (ऋ.१.९२.६), परिवीत इळस्पदे (ऋ.१.१२८.१), दिवस्पयो दिधिषाणाः (ऋ.१०.११४.१), रायस्पोषं यजमानेषु धनम् (ऋ.८.४९.७) इत्येतानि।

**सूत्रार्थसमन्वयः** - वाचस्पतिम् इत्यत्र वाचः पतिम् इति दशायाम् अत्र पतिशब्दः परं विद्यते तेन पूर्वस्य वाचः इति षष्ठ्यन्तस्य विसर्गस्य अनेन सूत्रेण सकारः। दिवस्पुत्राय इत्यत्र दिवः पुत्राय इति दशायाम् अत्र पुत्रशब्दः परं विद्यते तेन पूर्वस्य दिवः इति षष्ठ्यन्तस्य विसर्गस्य अनेन सूत्रेण सकारः। दिवस्पृष्ठम् इत्यत्र दिवः पृष्ठम् इति दशायाम् अत्र पृष्ठशब्दः परं विद्यते तेन पूर्वस्य दिवः इति षष्ठ्यन्तस्य विसर्गस्य अनेन सूत्रेण सकारः। तमसस्पारम् इत्यत्र तमसः पारम् इति दशायाम् अत्र पारशब्दः परं विद्यते तेन पूर्वस्य तमसः इति षष्ठ्यन्तस्य विसर्गस्य अनेन सूत्रेण सकारः। परिवीत इळस्पदे इति मन्त्रांशस्य इळस्पदे इत्यत्र इडः पदे इति दशायाम् अत्र पदशब्दः परं विद्यते तेन पूर्वस्य इळः इति षष्ठ्यन्तस्य विसर्गस्य अनेन सूत्रेण सकारः। दिवस्पयः इत्यत्र दिवः पयः इति दशायाम् अत्र पयस्-शब्दः परं विद्यते तेन पूर्वस्य दिव इति षष्ठ्यन्तस्य विसर्गस्य अनेन सूत्रेण सकारः। रायस्पोषम् इत्यत्र रायः पोषम् इति दशायाम् अत्र पोषशब्दः परं विद्यते तेन पूर्वस्य रायः इति षष्ठ्यन्तस्य विसर्गस्य अनेन सूत्रेण सकारः।



**विशेषः-** प्रकृतसूत्रे षष्ठ्यन्तस्य एव विसर्गस्य सकारः विहितः। तेन मनुः पुत्रेभ्यः दायम् इत्यत्र मनुशब्दः प्रथमान्तः, तेन पुत्रशब्दस्य परे विद्यमानत्वेऽपि पूर्वस्य विसर्गस्य न सः।

## २४.१६) इडाया वा॥ (८.३.५४)

**सूत्रार्थः** – छन्दसि पतिपुत्रपृष्ठपारपदपयस्पोषेषु षष्ठ्याः विसर्जनीयस्य वा सः भवति।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण विसर्गस्य सः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। इडायाः इति षष्ठ्यन्तम्, वा इति अव्ययपदम्। अस्मिन् सूत्रे छन्दसि वाऽम्रेडितयोः इत्यस्मात् सूत्रात् छन्दसि इति पदम्, सोऽपदादौ इत्यस्मात् सः इति प्रथमान्तम् पदम्, तयोर्य्वावचि संहितायाम् इत्यस्मात् सूत्रात् संहितायाम् इति सप्तम्यन्तम् पदम्, षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु इत्यस्मात् पतिपुत्रपृष्ठपारपदपयस्पोषेषु इति सप्तम्यन्तम् पदम् चेति अनुवर्तन्ते। विसर्जनीयस्य इत्यपि अनुवर्तते। तस्य च विसर्गस्य इत्यर्थः। छन्दसि इत्यस्य वेदे इत्यर्थः। संहिताशब्दस्य च सन्धिः इत्यर्थः। तेन सूत्रार्थो भवति वेदे संहितायाः विषये षष्ठ्यन्तस्य इडाशब्दस्य विसर्गस्य सकारो वा भवति यदि परे पतिपुत्रपृष्ठपारपदपयस्पोषाणाम् कोऽपि तिष्ठति इति।

**उदाहरणम्** - अस्य उदाहरणं भवति इळायास्पुत्रः, इळायाः पुत्रः, इळायास्पदे, इळायाः पदे इति।

**सूत्रार्थसमन्वयः** – इढायाः पुत्रः, इढायाः पदे इत्यत्र पुत्रशब्दः पदशब्दश्च विद्यते तेन प्रकृतसूत्रेण षष्ठ्यन्तस्य इढाशब्दस्य विसर्गस्य विकल्पेन सकारः। एवं सकारपक्षे इळायास्पुत्रः, इळायास्पदे इति सकाराभावपक्षे च इळायाः पुत्रः, इळायाः पदे इत्येतानि रूपाणि भवन्ति।

**वार्तिकम्-** निसस्तपतावनासेवने।

**वार्तिकार्थः-** निसः सकारस्य मूर्धन्यः स्यात्।

**वार्तिकव्यख्या-** निसः इति षष्ठ्यन्तं, तपतौ इति सप्तम्यन्तम्, अनासेवने इति सप्तम्यन्तं पदम्। तपति इति श्तिपा धातुनिर्देशः। आसेवनं नाम पुनः पुनः करणम्। न आसेवनम् अनासेवनम् तस्मिन् इति अनासेवने, पुनः पुनः अकरणे इत्यर्थः। एवं पुनः पुनः अकरणे अर्थे निसः सकारस्य मूर्धन्यादेशः भवति यदि परं तप्-धातुः स्याद् इति।

**उदहरणम्-** अस्य उदाहरणं भवति निष्टप्तं रक्षो निष्टप्ता अरातयः इति।

**वार्तिकार्थसमन्वयः-** निष्टप्तम् इत्यत्र निस् इत्यस्मात् परं तप्धातोः क्तान्तं रूपम् अस्ति। तेन निसः सकारस्य प्रकृतवार्तिकेन मूर्धन्यादेशे ष्टुना ष्टुः इत्यनेन तकारस्य टकारे निष्टप्तम् इति रूपम्।

**विशेषः-** वार्तिके अनासेवने इत्युक्तत्वात् पुनः पुनः करणे अर्थे निसः सस्य मूर्धन्यादेशः न भवति। यथा निस्तपति (पुनः पुनः तपति) इत्यत्र निसः सस्य न मूर्धन्यादेशः।

## २४.१७) सनोतेरनः॥ (८.३.१०८)

**सूत्रार्थः** – अनन्तस्य सनोतेः सस्य षः स्यात्।



**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण सकारः विधीयते। अस्मिन् सूत्रे द्वे पदे स्तः। सनोतेः इति षष्ठ्यन्तम्। अनः इत्यपि तथा। अविद्यमानो नकारो यस्य स अन्, तस्य अनः। अत्र सनोतेः इति श्तिपा धातुनिर्देशः। अस्मिन् सूत्रे पूर्वपदात् इत्यस्मात् सूत्रात् पूर्वपदात्, स्तुतस्तोमयोश्छन्दसि इत्यस्मात् सूत्रात् छन्दसि, सहेः साडः सः इत्यस्मात् सः इति षष्ठ्यन्तम्, इण्कोः इत्यस्माद् इण्कोः, तयोर्य्वावचि संहितायाम् इत्यस्मात् संहितायाम् इत्येतानि पदानि अनुवर्तन्ते। नुम्विसर्जनीयशर्व्यवायेऽपि इति अपदान्तस्य मूर्धन्यः इति च सूत्रे अनुवर्तेते। अनः इति सनोतेः विशेषणं तेन तदन्तविधिना अन्नन्तस्य सनोतेः इति लभ्यते। तेन सूत्रार्थो भवति वेदे संहितायाः विषये पूर्वपदाद् इण्कोः उत्तरस्य अन्नन्तस्य सनोतेः धातोः सस्य मूर्धन्यः भवति नुम्-विसर्जनीय-शर् इत्येतेषां व्यवधानेऽपि।

**उदाहरणम्** - अस्य उदाहरणं भवति गोषा इन्द्रो नृषा असि (ऋ.९-२-१०) इति।

**सूत्रार्थसमन्वयः** - गाः सनोतीति गोषाः। अत्र गोकर्मकात् सन्धातोः जनसनखनक्रमगमो विट् इत्यनेन विट्प्रत्यये, विट्प्रत्ययस्य सर्वस्य लोपे सनः नकारस्य विड्वनोरनुनासिकस्यात् इत्यनेन आकारे गो सा इति स्थिते प्रकृतसूत्रेण इणः (गकारोत्तरात् ओकारात्) परस्य अन्नन्तस्य सन्धातोः सकारस्य मूर्धन्यादेशः। तेन गोषा इति रूपम्। एवं नरं सनोति इति विग्रहे नृपूर्वकाद् सन्धातोः पूर्ववद् विट्प्रत्यये सर्वस्य लोपे नकारस्य आकारे नृ सा इति स्थिते प्रकृतसूत्रेण इणः ऋकारात् उत्तरस्य अन्नन्तस्य सनोतेः सस्य मूर्धन्यादेशः, तेन नृषा इति सिध्यति।

**विशेषः**- सूत्रेऽस्मिन् अनः इत्यनेन अनकारान्तः सन्धातु गृहीतः। गोसनिः इत्यत्र सस्य न षः। अत्र गां सनोति इति विग्रहे गोपूर्वकात् सन्धातोः छन्दसि वनसनरक्षिमथाम् इत्यनेन इन्प्रत्यये (सन् इन्) गो सनि इति स्थिते नान्तस्य सनः सत्त्वात् न प्रकृतसूत्रेण अत्र सस्य मूर्धन्यादेशः।

## २४.१८) छन्दस्यृदवग्रहात्॥ (८.४.२६)

**सूत्रार्थः** - ऋकारान्तादवग्रहात्परस्य नस्य णः।

**सूत्रव्याख्या** - विधिसूत्रमिदम्। अनेन सूत्रेण नस्य णकारो भवति। अस्मिन् सूत्रे द्वे पदे स्तः। छन्दसि इति सप्तम्येकवचनान्तम्, अवग्रहात् इति पञ्चम्येकवचनान्तं पदम्। छन्दसि इत्यस्य वेदे इत्यर्थः। ऋदवग्रहाद् इत्यस्य ऋच्च असौ अवग्रहश्च ऋदवग्रहः, तस्माद् इत्यर्थः। अवच्छिद्य विच्छिद्य पठ्यते इति अवग्रहः। अत्र अवग्रहो नाम विच्छिद्य पठनयोग्यत्वम्। एवं संहितापाठे विच्छिद्य पठनयोग्यता तिष्ठति पदपाठे च विच्छिद्य पठनयोग्यता न तिष्ठति। अस्मिन् सूत्रे रषाभ्यां नो णः इत्यस्मात् नो णः इति पदद्वयम्, तयोर्य्वावचि संहितायाम् इत्यस्मात् संहितायाम् इति पदम्, पूर्वपदात् संज्ञायामगः इत्यस्मात् पूर्वपदात् इति एतानि पदानि अत्र अनुवर्तन्ते। अट्कुप्वाङ्नुम्व्यवायेऽपि इति सम्पूर्णमपि सूत्रमत्र अनुवर्तते। तेन सूत्रार्थो भवति वेदे संहितायाः विषये अवग्रहविषय-ऋकारान्तपूर्वपदाद् उत्तरस्य नस्य णः भवति अट्-कु-पु-आङ्-नुम्-इति एतेषां व्यवधानेऽपि इति।

**उदाहरणम्** - अस्य उदाहरणं भवति नृमणाः, पितृयाणम् इति।

**सूत्रार्थसमन्वयः** - नृषु मनो यस्य इति विग्रहे नृमणाः इति। अत्र संहितापाठे पूर्वपदम् नृ इति ऋकारान्तम् अस्ति तस्य च विच्छिद्य पठनयोग्यता अपि वर्तते। तेन अवग्रहाद् ऋकारान्तात्परस्य नस्य



पवर्गेण व्यवधानेऽपि प्रकृतसूत्रेण णकारः सिध्यति। एवं पितृणां यानम् इति विग्रहे पितृयाणम् इति। अत्र संहितापाठे पूर्वपदं पितृ इति ऋकारान्तम् अस्ति। तस्य च विच्छिद्य पठनयोग्यता अपि वर्तते तेन अवग्रहाद् ऋकारान्तात्परस्य नस्य अट्प्रत्याहारस्थवर्णेन व्यवधानेऽपि प्रकृतसूत्रेण णकारः सिध्यति। नृऽमनाः इति पदपाठे तु विच्छिद्य पठनयोग्यता नास्ति अतः ऋकारान्तात् नृ-इत्यस्मात्परस्य नस्य न णकारः। एवं पितृऽयानम् इत्यत्रापि पूर्ववद् विच्छिद्य पठनयोग्यता नास्ति अतः ऋकारान्तात् पितृ-इत्यस्मात्परस्य नस्य न णकारः।



## पाठगतप्रश्नाः-२

१०. वेदे रोः पूर्वस्यातः स्थाने नित्यमनुनासिकः केन सूत्रेण भवति।
११. अप्राम्रेडितयोः इत्यस्य विग्रहं प्रदर्शयत।
१२. प्रदिवो अपस्कः इत्यत्र केन सूत्रेण विसर्गस्य सकारः।
१३. अनदितेः इत्यत्र का विभक्तिः।
१४. पञ्चम्याः विसर्गस्य पातौ परे सकारः केन सूत्रेण भवति।
१५. पतिपुत्रपृष्ठपारपदपयस्पोषेषु इत्यस्य विग्रहवाक्यं दर्शयत।
१६. इडायाः वा इत्यनेन कस्य विसर्गस्य सकारः भवति।
१७. वेदे अन्नन्तस्य सनोतेः सस्य षविधायकं सूत्रं किम्।
१८. वेदे ऋकारान्तादवग्रहात्परस्य नस्य णविधायकं सूत्रं किम्।



## पाठसारः

अस्मिन् पाठे अष्टाध्याय्याः अष्टमाध्यायस्य द्वितीयपादे तृतीयपादे च विद्यमानानां विशेषसूत्राणां व्याख्यानम् विहितम्। प्लुतस्वरः, विसर्गस्य सत्वविधानं, नकारस्य णकारविधानं, सस्य षत्वविधानम् इत्येते मुख्याः केचित् विषयाः अत्र प्रस्तुताः। कथं प्लुतस्वरः विधीयते इति ये यज्ञकर्मणि, अग्नीत्प्रेषणे परस्य च, विभाषा पृष्टप्रतिवचने हेः, आम्रेडितं भर्त्सने, अङ्गयुक्तं तिङाकाङ्क्षम्, पूर्वं तु भाषायाम्, अनुदात्तं प्रश्नान्ताभिपूजितयोः, उपरिस्विदासीदिति च, अनन्त्यस्यापि प्रश्नाख्यानयोः इति एतैः सूत्रैः आलोचितमस्ति। विसर्गस्य कथं सत्वविधानम् भवति इति छन्दसि वाऽप्राम्रेडितयोः, कः करत्करतिकृधिकृतेष्वनदितेः, पातौ च बहुलम्, षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु, इडाया वा इति एतैः सूत्रैः आलोचितानि। सनोतेरनः इति सूत्रेण निसस्तपतावनासेवने इति वार्तिकेन च षत्वविधानं प्रदर्शितम्। कथं रकारस्य विकल्पेन रुत्वम् भवति इति तद् प्रदर्शितं दीर्घादटि समानपादे इति सूत्रेण। आतोऽटि नित्यम् इति सूत्रेण अटि परयोः रोः पूर्वस्य आतः स्थाने कथं नित्यम् अनुनासिकस्वरः भवति तदपि



आलोचितम्। कथञ्च छन्दस्यृदवग्रहात् इति सूत्रं नकारस्य णत्वं विदधाति तदेतत् सर्वम् अस्मिन् पाठे आलोचितम् अस्ति।

##  पाठान्तप्रश्नाः

१. अग्नीत्प्रषणे परस्य च इति सूत्रं व्याख्यात।
२. विभाषा पृष्टप्रतिवचने हेः इति सूत्रं व्याख्यात।
३. आम्रेडितं भर्त्सने इति सूत्रं व्याख्यात।
४. दीर्घादटि समानपदे इति सूत्रं व्याख्यात।
५. पातौ च बहुलम् इति सूत्रं व्याख्यात।
६. निसस्तपतावनासेवने इति वार्तिकं व्याख्यात।
७. सनोतेरनः इति सूत्रं व्याख्यात।

##  पाठगतप्रश्नानाम् उत्तराणि

**उत्तरकूटः-१**

१. यज्ञकर्मणि
२. उपदेशवाक्ये निर्देशवाक्ये वा इत्यर्थः।
३. पृष्टप्रतिवचने।
४. भर्त्सने अर्थे।
५. अङ्गशब्देन युक्तं तिङन्तम्।
६. लौकिकसंस्कृते इत्यर्थः।
७. सत्कार इत्यर्थः।
८. अन्त्यस्य ग्रहणम्।
९. दीर्घादटि समानपदे इति।

**उत्तरकूटः-२**

१०. आतोऽटि नित्यम् इत्यनेन।
११. प्रश्च आम्रेडितञ्च प्राम्रेडिते, नप्राम्रेडिते अप्राम्रेडिते, तयोः अप्राम्रेडितयोः इति।
१२. कःकरत्करतिकृधिकृतेश्वनदितेः इत्यनेन।
१३. षष्ठीविभक्तिः।
१४. पातौ च बहुलम्।



१५. पतिश्च पुत्रश्च पृष्ठश्च पारश्च पदञ्च पयः च पोषश्च इति पतिपुत्रपृष्ठपारपदपयस्पोषाः, तेषु पतिपुत्रपृष्ठपारपदपयस्पोषेषु इति

१६. षष्ठ्याः।

१७. सनोतेरनः।

१८. छन्दस्यृदवग्रहात् इति।

## इति चतुर्विंशः पाठः





# एतत्पुस्तकस्थसूत्राणां सूची

## (अकारादिक्रमेण)

**पाठे स्थानम् - सूत्रम् - अष्टाध्ययीक्रमः**



(२४.१८) छन्दस्यृदवग्रहात्॥ (८.४.२६)
(१७.६) जनसनखनक्रमगमो विट्॥ (३.२.६७)
(२१.५) जनिता मन्त्रे॥ (६.४.५३)
(१८.२) ढश्छन्दसि॥ (४.४.१०६)
(२१.२) तस्य तात्॥ (७.१.४४)
(२०.७) तुजादीनां दीर्घोऽभ्यासस्य॥ (६.१.७)
(१८.५) तुमर्थे से-सेनसे-o॥ (३.४.९)
(१६.७) तृतीया च होश्छन्दसि॥ (२.३.३)
(२०.१) थट् च छन्दसि॥ (५.२.५०)
(२२.१५) दाधर्तिदर्धर्तिद o॥ (७.४.४२)
(१८.१३) दीर्घजिह्वी च छन्दसि॥ (४.१.५९)
(२४.१) दीर्घादटि समानपादे॥ (८.३.९)
(२२.१२) दुरस्युर्द्रविणस्यु o॥ (७.४.३६)
(१८.२५) दूतस्य भागकर्मणी॥ (४.४.१२०)
(१८.६) दृशे विख्ये च॥ (३.४.११)
(१६.८) द्वितीया ब्राह्मणे॥ (२.३.६०)
(१८.१८) द्व्यचश्छन्दसि॥ (४.३.१५०)
(२०.२३) द्व्यचोऽतस्तिङः॥ (६.३.१३५)
(१९.८) नक्षत्राद्धः॥ (४.४.१४१)
(२३.५) नसत्तनिषत्तानुत्त o॥ (८.२.६१)
(२३.४) नाद्धस्य॥ (८.२.१७)
(२३.१२) नित्यं छन्दसि (४.१.४६)
(१८.११) नित्यं छन्दसि॥ (४.१.४६)
(२२.११) नित्यं छन्दसि॥ (७.४.८)
(२१.१) निपातस्य च॥ (६.३.१३६)
(२१.१५) नेतराच्छन्दसि॥ (७.१.२६)
(१८.१९) नोत्वद्वर्ध्रबिल्वात्॥ (४.३.१५१)
(२४.१४) पातौ च बहुलम्॥ (८.३.५२)
(२३.१६) पाथोनदीभ्यां ड्यण् (४.४.१११)
(१८.२२) पाथोनदीभ्यां ड्यण्॥ (४.४.१११)
(२०.१७) पितरामातरा च छन्दसि॥ (६.३.३३)
(२४.६) पूर्वं तु भाषायाम्॥ (८.२.९८)
(२३.१) प्रसमुपोदः पादपूरणे॥ (८.१.६)
(१८.२४) बर्हिषि दत्तम्॥ (४.४.११९)
(२०.४) बहुप्रजाश्छन्दसि च॥ (५.४.१२३)
(१६.११) बहुलं छन्दसि॥ (२.४.३९)
(१६.१३) बहुलं छन्दसि॥ (२.४.७३)
(१६.१४) बहुलं छन्दसि॥ (२.४.७६)
(१७.१२) बहुलं छन्दसि॥ (३.२.८८)
(२०.२) बहुलं छन्दसि॥ (५.२.१२२)
(२०.८) बहुलं छन्दसि॥ (६.१.३४)
(२१.१४) बहुलं छन्दसि॥ (७.१.१०)
(२२.६) बहुलं छन्दसि॥ (७.१.१०३)
(२१.१३) बहुलं छन्दसि॥ (७.१.८)
(२२.१) बहुलं छन्दसि॥ (७.३.९७)
(२२.१७) बहुलं छन्दसि॥ (७.४.७८)
(२१.७) बहुलं छन्दस्यमाङ्योगेऽपि॥ (६.४.७५)
(१८.२१) भवे छन्दसि॥ (४.४.११०)
(२३.७) भुवश्च महाव्याहृतेः॥ (८.२.७१)
(१८.१२) भुवश्च॥ (४.१.४७)
(१९.१) मत्वर्थे मासतन्वोः॥ (४.४.१२८)
(१९.२) मधोर्ञ च॥ (४.४.१२९)
(१७.७) मन्त्रे श्वेतवहोक्थ o॥ (३.२.७१)
(२०.२) मन्त्रे सोमाश्वेन्द्रिय o॥ (६.३.१३१)
(२१.१२) मन्त्रेष्वाङ्यादेरात्मनः॥ (६.४.१४१)
(२३.१) मये च (४.४.१३८)
(२३.१३) मायायामण् (४.४.१२४)
(२२.९) मीनातेर्निगमे॥ (७.३.८१)
(२१.१९) यजध्वैनमिति च॥ (७.१.४३)
(१६.१) यजेश्च करणे॥ (२.३.६३)
(२४.१) ये यज्ञकर्मणि॥ (८.२.८८)
(१८.१) रात्रेश्चाजसौ॥ (४.१.३१)
(१८.२६) रेवतीजगतीहविष्याभ्यः o॥ (४.४.१२२)
(१७.१५) लिङर्थे लेट्॥ (३.४.७)
(१७.१७) लेटोऽडाटौ॥ (३.४.६४)
(२१.१८) लोपस्त आत्मनेपदेषु॥ (७.१.४१)
(१८.१६) वसन्ताच्च॥ (४.३.२०)
(१९.७) वसोः समूहे च॥ (४.४.१४०)
(१७.४) वहश्च॥ (३.२.६४)
(२१.१) वा छन्दसि॥ (३.४.८८)
(२०.११) वा छन्दसि॥ (६.१.१०६)
(२१.४) वा षपूर्वस्य निगमे॥ (६.४.९)



(२३.११) विचार्यमाणानाम्॥(८.२.९७)
(१७.१) विजुपे छन्दसि॥ (३.२.७३)
(२२.१३) विभाषा छन्दसि॥ (७.४.४४)
(२४.३) विभाषा पृष्टप्रतिवचने हेः॥ (८.२.९३)
(१६.२) विशाखयोश्च॥ (१.२.६२)
(१९.४) वेशोयशआदेर्भगाद्यल्॥ (४.४.१३१)
(१८.३) व्यत्ययो बहुलम्॥ (३.१.८५)
(१६.६) व्यवहिताश्च॥ (१.४.८२)
(१८.७) शकि णमुल्कमुलौ॥ (३.४.१२)
(२०.१) शीर्षंश्छन्दसि॥ (६.१.६०)
(२०.१२) शेश्छन्दसि बहुलम्॥ (६.१.७०)
(२२.२) श्रीग्रामण्योश्छन्दसि॥ (७.१.५६)
(२१.९) श्रुशृणुपॄकृवृभ्यश्छन्दसि॥ (६.४.१०२)
(१६.३) षष्ठीयुक्तश्छन्दसि वा॥ (१.४.९)
(२४.१५) षष्ठ्याः पतिपुत्रपृष्ठ ०॥ (८.३.५३)
(१७.१८) स उत्तमस्य॥ (३.४.६८)
(१८.२३) सगर्भसयूथसनुताद्यन्॥ (४.४.११४)
(२०.१८) सध मादस्थयोश्छन्दसि॥ (६.३.९६)
(२४.१७) सनोतेरनः॥ (८.३.१०८)
(१९.११) संपरिपूर्वात् ख च॥ (५.१.६२)
(१९.१) सप्तनोऽञ्छन्दसि॥ (४.१.६१)
(२३.१५) समुद्राभ्राद्धः (४.४.११८)
(१९.९) सर्वदेवात्तातिल्॥ (४.४.१४२)
(२२.१६) ससूवेति निगमे॥ (७.४.७४)
(१७.२) सिब्बहुलं लेटि॥ (३.१.३४)
(२२.१४) सुधितवसुधित ०॥ (७.४.४५)
(२१.१७) सुपां सुलुक्पूर्वसव ०॥ (७.१.३९)
(१८.९) सृपितृदोः कसुन्॥ (३.१.१७)
(१९.६) सोममर्हति यः॥ (४.४.१३७)
(२०.१५) स्यश्छन्दसि बहुलम्॥ (६.१.१३३)
(१७.५) हव्येऽनन्तःपादम्॥ (३.२.६६)
(१६.१२) हेमन्तशिशिरावहोरात्रे०॥ (२.४.२८)
(१८.१७) हेमन्ताच्च॥ (४.३.२१)
(२०.१६) ह्रस्वाच्चन्द्रोत्तरपदे०॥ (६.१.१५१)
(२२.७) ह्रु ह्वरेश्छन्दसि॥ (७.२.३१)

# राष्ट्रियमुक्तविद्यालयीशिक्षासंस्थानम्

## माध्यमिककक्षायाः पाठ्यक्रमः

## वेदाध्ययनम् (२४५)

### औचित्यम्

भारतीयदर्शनस्य संस्कृतसाहित्यस्य प्रादेशिकभाषीयसाहित्यस्य च समग्रं वाङ्मयम् वृक्षतुल्यम्। तस्य विस्तरः महान् अस्ति। बद्धमूलः अयं वृक्षः अतः एव महान् वर्तते, सनातनः वर्तते, चिरञ्जीवी अपि वर्तते। एतस्य वृक्षस्य मूलम् अपरिवर्तनीयम् अस्ति। परन्तु नूतनं पल्लवम्, नूतनानि पुष्पाणि, नूतनानि फलानि च नित्यं जायन्ते। किं तत् मूलम् इति स्वाभाविकीं जिज्ञासां देशविदेशेषु जनाः कुर्वन्ति। यः कोऽपि तत्र प्रयत्नपरः भवति सः सुफलं लभते एव। सः चिराय कृतार्थो भवति, कृतकृत्यः च भवति। किं तत् मूलम्। कः तस्य बोद्धा , का तस्य शाखा, कानि वा पुष्पाणि फलानि च। का तस्य छाया। कः तस्य सौरभः। के उपभोक्तारः। कतिविधाः ते सन्ति इति ईदृशं वैचित्र्यम् अस्य विषयस्य विषयः। परन्तु तस्य वृक्षस्य मूलं किम्। समग्रस्यापि अस्य विषयस्य तु उपन्यासः नैव सम्भवति। तथापि छात्राः यदि इतः किञ्चिदपि ज्ञातुं शक्नुयुः तर्हि अस्माकं प्रयत्नः सफलः इति मन्यामहे।

भारतीयसमाजस्य मनोरञ्जनं जीवनं दैनन्दिनव्यवहारः धर्माचरणम् आध्यात्मिकता इति समग्रस्य मूलम् गौरवशाली वेदः एव। भारतीयचिन्तने वैदिकवाङ्मयस्य वैशिष्ट्यं सुविदतं समेषां वेदितवेदितव्यानाम्। वैदिकवाङ्मयस्य विभूतिः वास्तविकी वर्तते। इदं वाङ्मयं प्राचीनम्, समग्रपृथिवीव्यापि , अस्य परिमाणं विशालम् , अस्य वैभवं निरतिशयम् , अस्य सौन्दर्यगुणः अनन्यतुल्यः। महत् मौलिकं पुरातनं च इदं वाङ्मयम्। अत एव तत्र अस्माकम् अभिनिवेशः प्रवृत्तिः जिज्ञासा श्रद्धा च वर्तन्ते। न केवलम् एतावन्मात्रम्। अन्यानि अपि निमित्तानि वैदिकवाङ्मयस्य अध्ययने विद्यार्थिनां कृते विशिष्टाम् अभिरुचिं जनयन्ति। वेदस्य सम्यक् ज्ञानस्य अभावे नैके धर्मसम्प्रदायाः मतानि आचाराः च प्रवर्तन्ते येषां प्रतिपाद्यं दुष्टं शास्त्रविरुद्धं च वर्तते। समाजः धर्मविषये अत्यन्तम् अन्धश्रद्धालुः भवति। अन्धश्रद्धानिवारणायापि वेदस्याध्ययनं नितान्तम् आवश्यकम्। विज्ञानस्याध्ययनम् उदपूरणाय। जीवनयात्रानिर्वाहाय। परन्तु जीवः कुतः आयाति, कुत्र गच्छति, तस्य सुखदुःखादीनां कारणानि कानि। इह लोकः परलोकः अस्ति वा न वा। पुनर्जन्म अस्ति वा न वा। यदि स्यात् तर्हि मर्त्येन किमपि कर्तव्यं न वा इति अयं समग्रो विषयः न विज्ञानाधीनः। अयं तु धर्मधीनः। तस्यैव समग्रस्य धर्मस्य मूलं वेदः। अतः जीविकार्थम् विज्ञानम् सुखदुःखनिर्णयाय इहपरलोकयात्रायै च वेदः इति सुष्ठु विभागः भवति। अतः वेदाध्ययनं सर्वेरपि सुतराम् कर्तव्यमेव।

### अधिकारी

अयं पाठ्यविषयः सम्पूर्णरूपेण संस्कृतभाषया लिखितः अस्ति। परीक्षा अपि संस्कृतमाध्यमेन एव भविष्यति। अतः अस्य पाठस्य कः अधिकारी इति नूनम् समुदेति प्रश्नः।

अत्र स छात्रः अधिकृतः यः -

- अधीतकाव्यव्याकरणकोषः वेदं विविदिषुः च।
- सरलसंस्कृतं, संस्कृतसाहित्यास्य सरलगद्यांशान् पद्यांशान् च पठितुम् बोद्धुं च शक्नोति।
- सरलसंस्कृतं बोद्धुं शक्नोति।
- पाणिनीयं व्याकरणं च जानीयात्।
- स्वभावं संस्कृतभाषया लिखित्वा प्रकटयितुं शक्नोति।

## प्रयोजनम् (सामान्यम्)

माध्यमिकस्तरे वेदाध्ययनस्य पाठ्यत्वेन योजनस्य कानिचन उद्देशानि अत्राधो दीयन्ते।

- भारतीयजीवनस्य सर्वस्वम् वेदः। तस्य ज्ञानं भवतु।
- वेदात् निर्गतानां दर्शनानाम् वैज्ञानिकतत्त्वानां कलासाहित्यादीनां च ज्ञानं भवतु।
- वेदाध्ययनेन पुण्यवान् ऋजुस्वभावः परोपकारी भवति जनः। अतः वेदाध्ययनं कथं कर्तव्यम्।
- वेदबहिर्भूतानि नास्तिकदर्शनानि अपूर्णानि सन्ति। तेषां पूर्णतायै वेदम् अधीत्य प्रयतेत छात्रः।
- वेदज्ञासूनां जिज्ञासाप्रशमनाय अध्येता समर्थो भवतु।
- संस्कृतस्य संस्कृतेश्च रक्षणाय समर्थः प्रयत्नपरः श्रद्धाशीलः भवतु छात्रः।
- अति प्राचीनाया भारतीयज्ञानसम्पदः वैज्ञानिकता सर्वजनोपकारिता महिमा च सगर्वं जगति प्रसारयेत् छात्रः।
- वेदज्ञानस्य वर्धनं भविष्यति येन वेदस्य सरलान् अंशान् पठित्वा छात्राः तेषाम् अंशानाम् अर्थान् ज्ञास्यन्ति। ते स्वतः मौखिकीं लिखितां च अभिव्यक्तिं कर्तुं शक्ष्यन्ति।
- वेदाध्ययनं कृत्वा छात्राः महाविद्यालयस्तरे विश्वविद्यालयस्तरे च प्रवर्तमानेषु पाठ्यक्रमेषु अध्ययनार्थम् अवसरं प्राप्तुं समर्थाः भविष्यन्ति।

## प्रयोजनम् (विशिष्टम्)

### वेदाध्ययने प्रवेशस्य सामर्थ्यम्

- समग्रस्य वेदवाङ्मयस्य प्रारूपं ज्ञात्वा तत्तदंशान् पठितुं शक्नुयात्।
- वैदिकसूक्तानाम् अध्ययने समर्थः भवेदध्येता।
- इमं विषयं पठित्वा वेदेषु प्रवेशं कुर्यात्।
- वेदानां गौरवं जानीयात्।
- पठितसामग्रीम् आश्रितानां प्रश्नानाम् उत्तराणि दास्यन्ति।

### सूक्तव्याख्याने सामर्थ्यम्

- वैदिकभाषाायाः ज्ञानं लब्ध्वा अन्येषां सूक्तानाम् व्याख्याने अध्ययने च प्रवर्तेत छात्रः।
- वैदिकव्याकरणस्य ज्ञानेन वैदिकभाषायाः भित्तिं ज्ञास्यति। तत्तत्सूत्राणां व्याख्याने समर्थो भविष्यति।
- सूक्तानां तात्पर्यं ज्ञास्यति। तेन वैदिकचिन्तायाः व्याख्याने समर्थो भविष्यति।

**सूक्तप्रयोगस्य व्याकरणप्रयोगस्य च सामर्थ्यम्**

- सूक्तानाम् अध्ययनेन आनन्दं प्राप्नुयात्। सूक्तोक्तानां विषयाणां स्वजीवने प्रयोगं कुर्यात्।
- वैदिकव्याकरणज्ञानेन वैदिकभाषाध्ययने समर्थो भूत्वा व्याकरणस्य प्रयोगं कुर्यात्।

## पाठ्यसामग्री

**पाठ्यक्रमेण सह निम्नलिखितसामग्री समायोजिता भविष्यति-**

- द्वे मुद्रिते पुस्तके।
- एकं शिक्षकाङ्कित-मूल्याङ्कनप्रपत्रम् प्रदास्यते। अनेन सह छात्रैः एकं परियोजनाकार्यमपि (Project) करणीयम्।
- वेदाध्ययनस्य शिक्षणं प्रायोगिकरूपेण अपि भविष्यति। परन्तु प्रायोगिकपरीक्षा कापि नास्ति।
- पाठनिर्माणे संपर्ककक्षासु च अध्यापनकाले छात्रेषु जीवनकौशलानां सम्यक् विकासः भवेत् इति ध्यातव्यम् भविष्यति। अनेन तेषु स्वतः युक्तिसमन्वितचिन्तनशक्तेः विकासः भविष्यति।
- मुक्तविद्यालये प्रवेशोत्तरं पाठ्यक्रममिमं विद्यार्थी एकवर्षत: अधिकाधिकं पञ्चवर्षेषु पूरयितुं शक्नोति।

## अङ्कमूल्यायनप्रविधिः परीक्षायोजना च

- पत्रस्य (१००) शतम् अङ्काः सन्ति। परीक्षाकालः होरात्रयात्मकः। अस्य पत्रस्य लिखितस्वरूपमेवास्ति (Theory)। प्रायोगिकरूपं (Practical) किमपि नास्ति। क्रमिकम् (Formative) समुच्चितं (Summative) चेति द्विविधं मूल्यायनं भविष्यति।
- **क्रमिकं मूल्यायनम्** - विंशतेः अङ्कानां (२०) शिक्षकाङ्कितस्य कार्यस्य (TMA) एकं पत्रं स्यात्। अस्य मूलायनम् अध्ययनकेन्द्रे (Study Centre) भवेत्। अस्य कार्यस्य अङ्काः अङ्कपत्रिकायां (Marks sheet) पृथक् उल्लिखिताः स्युः।
- **समुच्चितं मूल्यायनम्** - वर्षे वारद्वयं (मार्चमासि अक्टोबरमासि च) बाह्यपरीक्षा भविष्यति। तत्र परीक्षायां समुच्चितं मूल्यायनं भविष्यति।
- प्रश्नपत्रे ज्ञानम् (Knowledge), अवगमम् (Understanding) अभिव्यक्तिं (Application skill) चावलम्ब्य युक्तानुपातेन प्रश्नाः समाविष्टाः स्युः।
- परीक्षासु अतिलघूत्तरात्मक- लघूत्तरात्मक-निबन्धात्मक-प्रश्नानामपि समावेशः भविष्यति।
- सूत्रार्थः सूत्रव्याख्या रूपसाधनम् इति त्रयो मुख्याः विषयाः स्युः। अन्ये प्रसक्तानुप्रसक्ताः केचिद् विषयाः अपि स्युरिति अवधेयम्।

- उत्तीर्णतायै पणः (condition) - प्रतिशतं त्रयस्त्रिंशद् (३३%) अङ्काः उत्तीर्णतायै पणः (मानदण्डः) वर्तते।
- संस्थानस्य परीक्षायाम् उत्तरलेखनभाषा - संस्कृतम् (अनिवार्यम्)

## अध्ययनयोजना

- निर्देशभाषा (Medium of instruction) - संस्कृतम्।
- स्वाध्यायाय कालावधिः (Self-study hours) २४० होराः
- न्यूनतः त्रिंशत् (३०) सम्पर्ककक्षाः (Personal Contact Programme - PCP) अध्ययनकेन्द्रेषु भविष्यन्ति।
- भारांशः - सैद्धान्तिकः (Theory) शतं प्रतिशतम्। प्रायोगिकम् (Practical) - नास्ति।

## अङ्कविभाजनम्

अग्रे सारण्यां द्रष्टव्यम्

## पाठ्यविषयस्य उद्देशः (पाठ्यविषयबिन्दवः)

माध्यमिककक्षाया वेदाध्ययनस्य पुस्तके निम्नविषयाः अन्तर्भवन्ति। विवरणमधस्तादुपन्यस्यते।-

समग्रस्य पाठ्यविषयस्य त्रयो भागाः प्रकल्पिताः सन्ति। प्रतिभागम् कति पाठाः, स्वाध्यायाय कति होराः, सैद्धान्तिकपरीक्षायाम् कियान् अंशः, प्रायोगिकपरीक्षायाम् कियान् अंशः, प्रत्यध्यायम् अङ्कविभाजनं चेति विषयाः अत्र प्रदीयन्ते।

## अध्यायः - १ वैदिकसाहित्येतिहासः (पाठाः १-७)

### अध्यायस्य औचित्यम्

यथा मूलं विना वृक्षः न चिन्तयितुं शक्यते तद्वद् वेदं विना भारतीयवाङ्मयं वेदं विना चिन्तयितुं न शक्यते। अतः मूलभूतस्य वेदस्य अध्ययने प्रवृत्तेः पूर्वं वेदस्य सम्यक् परिचयः नितराम् आवश्यकः। अस्मिन् विभागे वेदस्य सामान्यपरिचयः विशेषपरिचयः कार्यते। वेदस्य आविर्भावः, पादपाठस्य प्रकाराः इति विषयः स्यात्। वेदस्य भाष्यकाराः, वेदभाष्यपद्धतिः, वैदिकाख्यानानि, वेदविषये दार्शनिकानां विमर्शः, वैदिकदेवताः चेति विषयाः अत्र अन्तर्भवन्ति।

## अध्यायः - २ वैदिकसूक्ताध्ययनम् (पाठाः ८-१५)

### अध्यायस्य औचित्यम्

वैदिकसूक्तानि भारतीयज्ञानस्य उत्सस्वरूपाणि। अत्र चितानां सूक्तानाम् अध्ययनाय सामग्री वर्तते। सूक्ताध्ययनं कथं भवति, के के विषयाः वेदाध्ययनकाले अवधेयाः सन्ति, सूक्तानां व्याकरणं किमस्ति, सूक्तस्य तात्पर्यं किमस्ति इति एते विषयाः अत्र प्रदीयन्ते।

## अध्यायः - ३ वैदिकी प्रक्रिया (पाठाः - १६-२४)

### अध्यायस्य औचित्यम्

व्याकरणज्ञानं विना वेदानाम् अर्थः स्पष्टं नावगम्यते। अतः अस्मिन् विभागे पाणिनीयव्याकरणस्य वैदिकभागः उपस्थाप्यते। तत्रापि कानिचन मुख्यानि चितानि सूत्राणि दीयन्ते। अत्र सूत्रव्याख्यानं कथं भवति, तेन वैदिकशब्दानां निष्पत्तिः कथं भवति इति विषयाः प्रामुख्येन उपन्यस्यन्ते।

## पाठ्यविषयस्य उद्देशः (पाठ्यविषयबिन्दवः)

माध्यमिककक्षायाः वेदाध्ययनस्य पुस्तके निम्नविषयाः अन्तर्भवन्ति -

| क्र.सं. | | मुख्यबिन्दवः | स्वाध्यायाय होराः | भारांशः (अङ्काः) |
|---|---|---|---|---|
| १ | अध्यायः- १ | **वैदिकसाहित्येतिहासः-** | ५६ | ३० |
| | पाठः - १ | वैदिकसाहित्येतिहासः- वेदविषयप्रवेशः, वेदानां वैशिष्ट्यम्, महत्त्वम्, वैदिकवाङ्मयम् तस्य विभूतिः च, वेदशब्दस्यार्थः, वेदलक्षणम्, वेदस्य पर्यायाः, वेदः पौरुषेयोऽपौरुषेयो वा | | |
| | पाठः - २ | वैदिकसाहित्येतिहासः- वेदाविर्भावकालः वेदपाठप्रकाराः मन्त्राणाम् ऋषिच्छन्दोदेवताविनियोगाः | | |
| | पाठः - ३ | वैदिकसाहित्येतिहासः- वेदभाष्यकाराः | | |
| | पाठः - ४ | वैदिकसाहित्येतिहासः- वेदभाष्यपद्धतिः | | |
| | पाठः - ५ | वैदिकसाहित्येतिहासः- वैदिकाख्यानम्, दार्शनिकानां नये वेदविमर्शः | | |
| | पाठः - ६ | वैदिकसाहित्येतिहासः- वैदिकयागाः, परिचयः, | | |
| | पाठः - ७ | वैदिकसाहित्येतिहासः- वैदिकी देवता, परिचयः, विभाजनम्, मतानि, आकारः, इन्द्रादिस्वरूपम् | | |
| २ | अध्यायः- २ | **वैदिकसूक्ताध्ययनम्-** | ७६ | ३० |
| | पाठः - ८ | वैदिकसूक्ताध्ययनम्- सूर्यसूक्तम् (ऋ.वे.१.११५), संज्ञानसूक्तम् (ऋ.वे. १०.१९१) | | |
| | पाठः - ९ | वैदिकसूक्ताध्ययनम्- पूषन्-सूक्तम् (ऋ.वे.६.५४), उषस्सूक्तम् (ऋ.वे.३.६१) | | |
| | पाठः - १० | वैदिकसूक्ताध्ययनम्- वरुणसूक्तम् (ऋ.वे.१.२५) | | |
| | पाठः - ११ | वैदिकसूक्ताध्ययनम्- यमसूक्तम् (ऋ.वे.१०.१४) | | |
| | पाठः - १२ | वैदिकसूक्ताध्ययनम्- शुनःशेपोपाख्यानम् (ऐ.ब्रा.७.३)-१ | | |

| | | | | |
|---|---|---|---|---|
| | **पाठः - १३** | वैदिकसूक्ताध्ययनम्- शुनःशेपोपाख्यानम् (ऐ.ब्रा.७.३)-२ | | |
| | **पाठः - १४** | वैदिकसूक्ताध्ययनम्- शुनःशेपोपाख्यानम् (ऐ.ब्रा.७.३)-३ | | |
| | **पाठः - १५** | वैदिकसूक्ताध्ययनम्- विश्वामित्रनदीसंवादः (ऋ.वे.३.३३) | | |
| ३ | **अध्यायः- ३** | **वैदिकी प्रक्रिया** | १०८ | ४० |
| | **पाठः - १६** | वैदिकी प्रक्रिया- अष्टाध्याय्याः अध्यायः १-२ | | |
| | **पाठः - १७** | वैदिकी प्रक्रिया- अष्टाध्याय्याः अध्यायः ३ | | |
| | **पाठः - १८** | वैदिकी प्रक्रिया- अष्टाध्याय्याः अध्यायः ३-४ | | |
| | **पाठः - १९** | वैदिकी प्रक्रिया- अष्टाध्याय्याः अध्यायः ४ | | |
| | **पाठः - २०** | वैदिकी प्रक्रिया- अष्टाध्याय्याः अध्यायः ५-६ | | |
| | **पाठः - २१** | वैदिकी प्रक्रिया- अष्टाध्याय्याः अध्यायः ६-७ | | |
| | **पाठः - २२** | वैदिकी प्रक्रिया- अष्टाध्याय्याः अध्यायः ७ | | |
| | **पाठः - २३** | वैदिकी प्रक्रिया- अष्टाध्याय्याः अध्यायः ८ | | |
| | **पाठः - २४** | वैदिकी प्रक्रिया- अष्टाध्याय्याः अध्यायः ८ | | |

# प्रश्नपत्रस्य प्रारूपम् (Question Paper Format)

विषयः - वेदाध्ययनम् (२४५) (Veda Adhyayan) स्तरः- माध्यमिककक्षा

परीक्षाकालावधिः (Time)- होरात्रयम् (३ hrs) पूर्णाङ्काः (Full Marks)- १००

## लक्ष्यानुसारि अङ्कविभाजनम्

| विषयाः | अङ्काः | प्रतिशतं योगः |
|---|---|---|
| ज्ञानम् (Knowledge) | २५ | २५% |
| अवबोधः (Understanding) | ४५ | ४५% |
| अनुप्रयोगकौशलम् (Application Skill) | ३० | ३०% |
| **महायोगः->** | **१००** | |

## प्रश्नप्रकारेण अङ्कभारविभाजनम्

| प्रश्नप्रकारः | प्रश्नसंख्या | अङ्काः | योगः |
|---|---|---|---|
| दीर्घोत्तरीयप्रश्नाः (LA) | ५ | ६ | ३० |
| लघूत्तरात्मकप्रश्नाः (SA) | १० | ४ | ४० |
| सुलघूत्तरीयप्रश्नाः (VSA) | १० | २ | २० |
| बहुविकल्पीयप्रश्नाः एकाङ्कप्रश्नाः स्तम्भमेलनं रिक्तस्थानपूर्तिः च | १० | १ | १० |
| **महायोगः->** | **३५** | | **१००** |

## पाठ्यविषयविभागानुसारि भारांशः

| विषयघटकाः | अङ्काः | स्वाध्यायाय होराः |
|---|---|---|
| १. वैदिकसाहित्येतिहासः | ३० | ५६ |
| २. वैदिकसूक्ताध्ययनम् | ३० | ७६ |
| ३. वैदिकी प्रक्रिया | ४० | १०८ |
| **महायोगः ->** | **१००** | **२४०** |

## प्रश्नपत्रस्य काठिन्यस्तरः

| प्रश्नस्तरः | अङ्काः |
|---|---|
| कठिनः (Difficult) (मेधावी एव उत्तरदाने समर्थः) | २५ |
| मध्यमः (Medium) (नित्यं पठन् अध्यवसायी छात्रः उत्तरदाने समर्थः) | ५० |
| सरलः (Easy) (समग्रां पाठसामग्रीम् अल्पशः पठन् छात्रः उत्तरदाने समर्थः) | २५ |

# प्रश्नपत्रप्रतिमा - Sample Question Paper

अस्मिन् प्रश्नपत्रे ... प्रश्नाः सन्ति। .... मुद्रितपुटानि च सन्ति।

| Roll No. अनुक्रमाङ्कः | ४ | ५ | ० | १ | ५ | ९ | १ | ८ | ३ | ० | ० | १ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|

Code No. गूढसंख्या **५५/SS/A/S**

SET स्तबकः **A**

## वेदाध्ययनम्

## Veda Adhyayan

## (२४५)

Day and Date of Examination
परीक्षादिनं दिनाङ्कश्च ..... ______________________

Signature of two Invigilators
निरीक्षकयोः हस्ताक्षरम् १) ______________________
२) ______________________

## सामान्या निर्देशाः

१. अनुक्रमाङ्कः प्रश्नपत्रस्य प्रथमपुटे नूनं लेख्यः।
२. निरीक्ष्यताम् यत् प्रश्नपत्रस्य पुटसंख्या प्रश्नानां च संख्या प्रथमपुटस्य प्रारम्भे प्रदत्तसंख्या समाना न वा। प्रश्नक्रमः सम्यग् न वा।
३. वस्तुनिष्ठप्रश्ननाम् (क), (ख), (ग), (घ) एषु विकल्पेषु युक्तम् उत्तरं चित्वा उत्तरपत्रे लेख्यम्।
४. समेषां प्रश्नानाम् उत्तराणि निर्धारितसमये एव लेख्यानि।
५. उत्तरपत्रे आत्मपरिचयात्मकं लेखनम् अथवा निर्दिष्टस्थानं विहाय अन्यत्र क्वापि अनुक्रमाङ्कलेखनं सर्वथा वर्जितमस्ति।
६. स्वस्य उत्तरपत्रे प्रश्नपत्रस्य गूढसंख्या नूंन लेख्या।
७. समेषां प्रश्नानाम् उत्तराणि संस्कृतभाषया एव लेख्यानि।

# वेदाध्ययनम् - Veda Adhyayan

**(२४५)**

परीक्षासमयावधिः (Time) होरात्रयम् (३ Hrs) पूर्णाङ्काः (Full Marks) - १००

**निर्देशाः -**

१. अस्मिन् प्रश्नपत्रे [A] भागे १०, [B] भागे १०, [C] भागे १०, [D] ५ इति आहत्य ३५ प्रश्नाः सन्ति।
२. प्रश्नस्य दक्षिणे पार्श्वे संख्यासु (अङ्काःx प्रश्नाः=पूर्णाङ्काः) इति एवम् अङ्कान् निर्दिशति।
३. समे प्रश्ना अनिवार्याः।

### [A] दशानां युक्तं विकल्पं चिनुत। १ x १०=१०

१) वेदेषु प्राचीनतमः ग्रन्थः कः।
(क) सामवेदः (ख) यजुर्वेदः (ग) अथर्ववेदः (घ) ऋग्वेदः

२) वेदः अपौरुषेयः इति कस्य मतम्।
(क) मीमांसकस्य (ख) वैयाकरणस्य (ग) चार्वाकस्य (घ) आधुनिकपण्डितस्य

३) मन्त्रब्राह्मणयोर्वेदनामधेयम् इति केन उक्तम्।
(क) यास्केन (ख) आपस्तम्बेन (ग) मनुना (घ) सायनेन

४) ब्राह्मणसर्वस्वम् इति ग्रन्थः केन वेदेन सम्बद्धः।
(क) कृष्णयजुर्वेदेन (ख) शुक्लयजुर्वेदेन (ग) ऋग्वेदेन (घ) सामवेदेन

५) शुनःशेपोपाख्यानं कस्मिन् वेदे वर्तते।
(क) ऋग्वेदे (ख) सामवेदे (ग)यजुर्वेदे (घ) अर्थववेदे

६) वरुणसूक्तस्य देवता का।
(क) अग्निः (ख) यमः (ग) उषा (घ) वरुणः

७) विपाशानद्याः तीरं कः आगतः।
(क) विश्वामित्रः (ख) वसिष्ठः (ग) अत्रिः (घ) वामदेवः

८) सूर्यसूक्तस्य ऋषिः कः वर्तते।
(क) अत्रिः (ख) व्याडिः (ग)कुत्सः (घ) शौनकः

९) हैमन्तिकम् इत्यत्र कः तद्धितप्रत्ययः।
(क) ठक् (ख) ठञ् (ग) घः (घ) छः

१०) दृशे इत्यस्य लौकिकं रूपं किम्।

(क) द्रष्टुम्    (ख) पश्यति    (ग) अद्राक्षीत्    (घ) ददर्श

**[B] दशानां यथानिर्देशम् उत्तराणि लिखत।** **२ x १०=२०**

१) ऋग्वेदस्य सर्वप्रथमं भाष्यम् अधुना कस्य उपलभ्यते। सामसंहितायाः प्रथमः भाष्यकारः कः। १+१=२

२) निरुक्तकारः कः। निघण्टुशब्दार्थः कः। १+१=२

३) अग्निष्टोमस्य अपरं नाम किम्। कस्मिन् ब्राह्मणे अग्निष्टोमस्य विवरणं विस्तरेण वर्तते। १+१=२

४) वैदिकसाहित्ये कति युगानि सन्ति। तानि च कानि। १+१=२

५) उष्स्सूक्तस्य ऋषिः कः। अस्य सूक्तस्य देवता का। १+१=२

६) वसन्ताच्च इत्यनेन कः तद्धितप्रत्ययो विधीयते। पाथ्यः इत्यत्र कः तद्धितप्रत्ययः। १+१=२

७) गृभाय इत्यस्य लौकिकं रूपं किम्। वक्तुम् इत्यस्य वैदिकं रूपं किम्। १+१=२

८) सम्परिपूर्वात् ख च इति सूत्रार्थं लिखत। ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे इति सूत्रार्थं लिखत। १+१=२

९) माधवः इत्यत्र कः तद्धितप्रत्ययः। मधव्यः इत्यत्र कः तद्धितप्रत्ययः। १+१=२

१०) अनुदात्तं प्रश्नान्ताभिपूजितयोः इति कीदृशं सूत्रम्। छन्दस्यृदवगृहात् इत्यनेन किं विधीयते। १+१=२

**[C] दश अनतिदीर्घोत्तरैः समाधत्त।** **४ x १०=४०**

१) वेदशब्दार्थं लिखत अथवा वेदलक्षणं प्रतिपादयत।

२) शुनःशेपोपाख्यानं संक्षेपेण वर्णयत।

३) अग्निस्वरूपं वर्णयत अथवा रुद्रस्वरूपं वर्णयत।

४) सङ्गच्छध्वं संवदध्वम् ...इति मन्त्रं पूरयित्वा अन्वयं सरलार्थं च लिखत। (१+१+२=४)

५) विश्वामित्रनदीसंवादस्य सारं संक्षेपेण लिखत।

६) वयमु त्वा पथस्पथे..इति मन्त्रं पूरयित्वा अन्वयं सरलार्थं च लिखत। (१+१+२=४)

७) थट् च छन्दसि इति सूत्रं सोदाहरणं व्याख्यात।

८) अश्विमानण् इति सूत्रं सोदाहरणं व्याख्यात। अथवा हेमन्तशिशिरावहोरात्रे च छन्दसि इति सूत्रं सोदाहरणं व्याख्यात।

९) छन्दसि शायजपि इति सूत्रं सोदाहरणं व्याख्यात।

१०) तेजस्वी इति शब्दरूपस्य प्रक्रिया लेख्या। अथवा नक्षत्रियः इत्यस्य प्रक्रियां प्रदर्शयत।

**[D] पञ्च दीर्घोत्तरैः समाधेयाः।** **६ x ५=३०**

१) मीमांसकमते वेदस्य वैशिष्ट्यं प्रतिपादयत।

२) सूर्यसूक्तस्य सारं लिखत।

३) वरुणस्वरूपं यमस्वरूपं वा वर्णयत।

४) षष्ठीयुक्तश्छन्दसि इति सूत्रं व्याख्यात। अथवा शकि णमुल्कमुलौ, ईश्वरे तोसुन्कसुनौ इत्यनयोः व्याख्या कार्या।

५) छन्दसि परेऽपि इति व्यवहिताश्च इत्यनयोः व्याख्या कार्या।

--)(O)(--

# प्रश्नपत्रप्रतिमाया उत्तरमाला

**[A] दशानां युक्तः विकल्पः।** १ x १०=१०

१-(घ), २-(क), ३-(ख), ४-(ख), ५-(क), ६-(घ), ७-(क), ८-(ग), ९-(ख), १०-(क)

**[B] दशानां यथानिर्देशम् उत्तराणि।** २ x १०=२०

१) ऋग्वेदस्य सर्वप्रथमं भाष्यम् अधुना स्कन्दस्वामिनः उपलभ्यते। सामसंहितायाः प्रथमः भाष्यकारः माधवः। १+१=२

२) निरुक्तकारः यास्काचार्यः। निघण्टुशब्दस्य शब्दानां सूची इत्यर्थः। १+१=२

३) अग्निष्टोमस्य अपरं नाम ज्योतिष्टोमः। ऐतरेयब्राह्मणे अग्मिष्टोमस्य विवरणं विस्तरेण वर्तते। १+१=२

४) वैदिकसाहित्ये चत्वारि युगानि। छन्दोयुगम्, मन्त्रयुगम्, ब्राह्मणयुगम्, सूत्रयुगं चेति त्रयः गुणाः। १+१=२

५) उष्स्सूक्तस्य ऋषिः कःवामदेवः। १+१=२

६) वसन्ताच्च इत्यनेन ठञ् प्रत्ययो विधीयते। पाथ्यः इत्यत्र तद्धितसंज्ञकः ड्यण् प्रत्ययः। १+१=२

७) गृभाय इत्यस्य लौकिकं रूपं गृहाण इति। वक्तुम् इत्यस्य वैदिकं रूपं वक्षे इति। १+१=२

८) सम्परिपूर्वात् वत्सरान्तात् प्रातिपदिकात् छन्दसि अधीष्टादिष्वर्थेषु खः स्यात् छश्च। ह्रस्वात्परस्य चन्द्रशब्दोत्तरपदस्य सुडागमः स्यात् मन्त्रे। १+१=२

९) माधवः इत्यत्र तद्धितसंज्ञकः अप्रत्ययः। मधव्यः इत्यत्र तद्धितः यत्प्रत्ययः। १+१=२

१०) अनुदात्तं प्रश्नान्ताभिपूजितयोः इति विधिसूत्रम्। ऋकारान्तात् अवग्रहात् परस्य नस्य णत्वं स्यात् छन्दसि। १+१=२

**[C] दश अनतिदीर्घोत्तरैः समाधत्त।** ४ x १०=४०

१) बिन्दुः - १.५ / १.८ द्रष्टव्यः

२) बिन्दुः - ५.१ द्रष्टव्यः

३) बिन्दुः - ७.६ / ७.८ द्रष्टव्यः

४) बिन्दुः - ८.१.२, प्रथममन्त्रः द्रष्टव्यः १+१+२=४

५) बिन्दुः - १५.२ द्रष्टव्यः

६) बिन्दुः - ९.२, प्रथमः मन्त्रः द्रष्टव्यः १+१+२=४

७) बिन्दुः - २०.१ द्रष्टव्यः

८) बिन्दुः - ८.१४ / १.१५ द्रष्टव्यः

९) बिन्दुः - १८.२ द्रष्टव्यः

१०) बिन्दुः - २०.२ / १९.८ द्रष्टव्यः

**[D] पञ्च दीर्घोत्तरैः समाधेयाः।** ६ x ५=३०

१) बिन्दुः - ५.७ द्रष्टव्यः

२) बिन्दुः - ८.२ द्रष्टव्यः

३) बिन्दुः - १०.३ / ११.२ द्रष्टव्यः

४) बिन्दुः - १६.३ / १८.७ & १८.८ द्रष्टव्यः

५) बिन्दुः - १६.५ & १६.६ द्रष्टव्यः

--)(O)(--